चन्द्रिका

तत्र हेतुत्वोक्तेः। किञ्च—त्वयाऽत्रोक्ताशब्दत्वसिद्ध्यर्थं चतुर्थपादेऽव्यक्तादिशब्दानां सूक्ष्मशरीरादिपरतामुक्त्वा प्रधानपरतां निषेधता तस्य सर्वथा वेदासिद्धत्वमेवाशब्दत्वं वाच्यम्। तच्चाशक्यमित्युक्तम्। एतेन—स्वप्रधानतया वेदाप्रतिपाद्यत्वमशब्दत्वमिति निरस्तम्। तदेतदभिप्रेत्योक्तं भाष्ये—"न चाशब्दत्वमितरसिद्धम्" इति। अनुव्याख्याने च "न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ" इति। किञ्च आत्मन ईक्षारूपस्य न स्वरूपेणेक्षितृत्वं। अव्यक्तादिनऽविशिष्टस्य तत्सम्भवेऽप्यव्यक्तस्याप्यात्माविवेकेन आत्मविशिष्टस्य तत्स्यात्। "तन्निष्ठस्य" इत्याद्युत्तरसूत्रविरोधश्च। 'आत्मशब्दात्'

प्रकाशः

साङ्ख्यानुमानकल्पितत्त्वविवक्षामुपेत्य दोष उक्तः। सा विवक्षैवायुक्तेत्याह—किञ्चेति। 'प्रधानस्य' इति शेषः। इत्युक्तमिति। "त्वयाऽपि त्रिगुणस्य" इत्यादिनेति भावः। 'एतेन' अशक्यमित्युक्तत्वेनेत्यर्थः। इतरेति। साङ्ख्यस्य मायिनश्चेत्यर्थः। 'अमी' साङ्ख्यः, मायी च। एवमाद्यसूत्रे 'अशब्दं' इति भागस्याभिमतार्थं निरस्येदानीं 'ईक्षतेः' इति भागस्य तं निराह—किञ्चेति। 'अविवेकेन' भेदाग्रहेण। तथा च न तेन प्रधाननिरासमिद्धिरिति भावः। तन्निष्ठस्येति। तन्मते "तत्त्वमसि श्वेतकेतो" इति शुद्धनिष्ठस्यैव "तस्य तावदेव चिरं" इति मोक्षोपदेशादित्यर्थोक्तेरिति भावः। एतेन

चन्द्रिका

इत्यत्रापि आत्मशब्दवाच्यत्वं हेतुश्चेदसिद्धिः । तल्लक्ष्यत्वतत्प्रतिपाद्यत्वमात्रे तु प्रधानस्यापि । किञ्च किमात्मशब्दस्य चेतनार्थत्वादचेतने प्रधाने तदनुपपत्तिर्विवक्षिता, किं वा तस्य स्वरूपार्थत्वात् "अनेन जीवेनात्मना" इति चेतनतया प्रसिद्धजीवस्वरूपतायाः अचेतनेऽनुपपत्तिः । नाद्य, चेतनत्वस्य ज्ञातृत्वरूपत्वे ब्रह्मण्यपि शुद्धे तदभावात् । विशिष्टे चेत्प्रधानेऽप्युक्तरीत्या तत्सम्भवात् । ज्ञानत्वरूपत्वे तु तदर्थस्यात्मशब्दस्य ईक्षितृत्वं गौणमित्यत्रैव हेतुत्वेन गौणत्वाभावे हेतुत्वायोगात् । नान्त्यः, सार्वज्ञ्यादिविरुद्धांशत्यागेन चिद्रूपेण जीवे ब्रह्मैक्यवज्जडत्वादिविरुद्धांशत्यागेन सद्रूपेण

प्रकाशः

"ईक्षितृत्वं चेक्षणगुणयोगित्वं तद्ब्रह्मण्यपि गौणमेव" इति सुधा विवृता । एवमाद्यसूत्रार्थं निरस्य, यदुक्तं द्वितीये ईक्षणस्यागौणत्वे 'आत्मशब्दात्' इति, तत्र सुधोक्तमुपलक्षणं मत्वा, तद्विकल्प्य निराह— **आत्मेति** । **असिद्धिरिति** । "सदेव सोम्येदमग्र आसीत्" इत्यादिकारणवाक्यार्थत्वेन त्वदभिमते शुद्धेऽवाच्ये आत्मपदवाच्यत्वानङ्गीकारादित्यर्थः । प्रतिपाद्यत्वमात्रं वाच्यत्वलक्ष्यत्वसाधारणम् । तथाच गौणेक्षणवत्यपि सत्त्वादप्रयोजक इति भावः । आद्येऽपि चेतनत्वं ज्ञातृत्वं वा ज्ञानत्वं वेति विकल्प्य क्रमेण निराह— **चेतनत्वस्येति** । 'उक्तरीत्या' 'आत्माविवेकेन' इत्युक्तरीत्येत्यर्थः । 'तदर्थस्य' ज्ञानत्वरूपचेतनत्वार्थकस्य । **प्रधानैक्यस्येति** । तथा

चन्द्रिका

प्रधानैक्यस्यापि सम्भवात् । "तन्निष्ठस्य" इति सूत्रेऽपि तच्छब्दार्थः शुद्ध आत्मा,' विशिष्टो वा । नाद्य', तस्याद्यसूत्रोक्तेक्षितृत्वायोगात् । नान्त्यः, विशिष्टनिष्ठस्य साक्षान्मोक्षानन्वयात् । परम्परया तदन्वयस्तु प्रधाननिष्ठस्यापि । एवं सूत्रान्तरेऽपि सुधोक्तरीत्या दूषणं द्रष्टव्यम् ।

प्रकाशः

च न तत्प्रधानव्यावर्तकमिति भावः । उपलक्षणमेतत्, "गौणश्चेत्" इति पुल्लिङ्गानुपपत्तिश्च प्रागुक्ता ध्येया । तृतीयसूत्रार्थमपि निराह—**तन्निष्ठस्येति । प्रधाननिष्ठस्येति ।** आत्मानात्मविवेकार्थमनात्मज्ञानस्याप्यावश्यकत्वादिति भावः । **एवमिति ।** सूत्राणामर्थः प्रागस्माभिरुक्तः । दूषणं तु—"तन्निष्ठस्य" इत्यत्रात्मशब्दस्य गौणत्वे शङ्किते तदुत्तरसूत्रे बाधकाभाव एव वाच्यो न तु हेयत्वावचनोक्तिः सङ्गता । न हि साङ्ख्यनाद्वैतज्ञानार्थं प्रधानोपदेशः शङ्कितः, येन सा सङ्गता स्यात् । हेयत्वावचनमन्नमयादिष्विवाब्रह्मत्वेऽप्युपपन्नं च । अन्नमयादिषु पूर्वपूर्वस्याब्रह्मत्वे उत्तरोत्तरब्रह्मत्वोक्तिर्ज्ञापिकेति चेत्, अत्राप्यब्रह्मत्वे "बहु स्यां" इति परिणामोक्तिर्ज्ञापिकेति सुवचम् । पञ्चमेऽपि स्वाप्ययो नाम जीवस्य सुप्तत्वादावैक्यं वा, परिष्वङ्गमात्रं वा । नाद्यः, ब्रह्मपक्षेऽप्यभावात् । द्वितीयं तु प्रधानेऽपि सम्भवति । षष्ठेऽपि ब्रह्मकारणताविषयं गतिसामान्यं साङ्ख्यस्यासिद्धमेव । ईक्षणादिना तज्ज्ञापने प्रथमसूत्रेण गतार्थता । "श्रुत-

चन्द्रिका

एतेनेदमधिकरणं प्रधानादेर्जडस्य हेतुत्वनिरासकमिति केषा [

प्रकाश

त्वात्" इत्येतदपि परस्यासिद्धमेव । पूर्ववदीक्षणादिना तज्ज्ञापने पूर्वत्नप्रधानसूत्रेण गतार्थता, गतिसूत्रेण पुनरुक्तिश्चेति ।

एतेनेति । "सदेव" इत्यादिवाक्यबोध्यं प्रधानमुत ब्रह्मे मशये, "येनाश्रुतं श्रुतं भवति" इति "यथा सोम्यैके मृत्पिण्डेन" इत्यनुमानाकारवाक्यप्रतिपाद्यस्यानुमानिकत्वावगम प्रधानमेव । न चेक्षणायोग, तेज प्रभृतिगतगौणेक्षणसाहचर्येण गौ त्वादिति प्राप्ते, ईक्षणान्वयात् ब्रह्मैव । न चानुमानिकत्वावगमा रोध, "येनाश्रुत" इत्यादौ हेत्वनुपादानेनानुमानाकारत्वाभावात् न च "यथा सोम्य" इत्यादि दृष्टान्तेनैवास्यानुमानाकारत सिद्धि, तस्यान्यज्ञानेनान्यज्ञानासम्भवशङ्कासमाधानार्थकतया अ पामिद्धत्वात् । न चेक्षणं गौणमिति वाच्यम्, "तदैक्षत" इ क्षितरि "ऐतदात्म्यमिदं सर्वं" इति चेतनवाच्यात्मशब्दात् । "तत्त्वमसि" इ तदात्मतया प्रत्यगात्मानुसन्धाननिष्ठस्य "तस्य तावदेव चिर इति मोक्षोपदेशाच्च । हेयत्वावचनाच्च सद्ब्रह्मैव, प्रधानस्य मोक्षवि

त्वेन हेय        १ "सता सोम्य" इति जीवस्य स्वरूप

चन्द्रिका

पक्षोऽप्यपास्तः। समन्वयासङ्गत्यादेः। किञ्च न तावत्प्रधानस्य कारणत्वमुपादानत्वं वा निरसितुमिदमधिकरणम्, तयोस्त्वन्मतेऽपि प्रधाने सत्त्वात्। उक्तं हि "तदधीनत्वात्" इति सूत्रे त्वयैव "न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः, अपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेण" इति। यथा च प्रधानं केवलं अकारणं, तथा ब्रह्मापि, विशिष्टस्यैव कारणत्वात्। नापि प्रधानस्य वाक्यान्तरात्कारणत्वेऽपि, "सदेव सोम्येदं" इत्यादिसद्विद्यायाः ब्रह्मकारणत्वपरत्वमिति वक्तुमिदम्, यदि सद्विद्या ब्रह्मपरा, तदा तदैकार्थ्यात् सर्वाणि कारणवा-

प्रकाशः

इति "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति न पुरुषोत्तमस्यैव हेतुत्वोक्त्या तद्गतिसामान्यात् अत्रापि "आत्मत एवेदं सर्वं" इति ब्रह्मकारणत्वस्य श्रुतत्वाच्चेति सिद्धान्त इत्याहुरित्यर्थः। एतेनेत्युक्तं व्यनक्ति—समन्वयेति। सूत्राक्षरार्थासामञ्जस्यादिरादिपदार्थः। अधिकरणप्रमेयं निराह—किञ्चेति। प्रधानस्य कारणत्वं वा, उपादानत्वं वा, वाक्यान्तरसिद्धकारणत्वेऽप्येतद्वाक्यबोध्यत्वं वा, भगवच्छरीरत्वं वा, कर्तृत्वं वा, कर्तृत्वे सत्युपादानत्वं वा निरस्यत इति विकल्प्याद्यद्वितीयौ निराह—न तावदिति। विशिष्टस्येति। प्रधानादिना। तृतीयं निरस्यति—नापीति। सर्वाणीति। तथा च न क्वापि प्रधानस्य कारणत्वसिद्धिरिति भावः।

चन्द्रिका

क्यानि ब्रह्मपराणीति त्वयैवोक्तत्वात् । अन्यथेक्षत्यधिकरण कारणस्याचित्त्वनिरासकमिति त्वदभिमेतरयासिद्धे । न च सर्वेषा कारणवाक्याना ब्रह्मपरत्वेऽपि प्रधानकारणताया मानान्तरात् सिद्धि, कारणस्य शास्त्रयोनित्वात् । नापि प्रधानस्येश्वरनियम्यत्वादिरूप तच्छरीरत्वनिरूपणार्थमिदम्, अत्र तदप्रतीते. । अन्तर्याम्यधिकरणे "तदधीनत्वात्" इत्यादौ अन्यत्रैव तन्निरूपणाच्च । नापि प्रधानस्य कर्तृत्व वा, कर्तृत्वे सत्युपादानत्व वा निरसितुमिदम्, *तयो प्रधाने साङ्ख्यैरनाभ्युपगमाङ्गीकारात् । प्रकृत्यधिकरणेन पुनरुक्तेश्च ।* किञ्च त्वत्पक्षे शास्त्रयोनिसूत्रे वेदान्तानामनुमानप्राप्तकारणानुवादित्वेन अविचार्यत्वमिति पूर्वपक्षवदिहापि साङ्ख्यस्मृतिप्राप्तानुवादित्वेनाविचार्यत्वमिति पूर्वपक्षसम्भवादिदमधिकरण चतुस्सूत्रीवत् शास्त्रारम्भसमर्थनार्थं सत् समन्वयसूत्रात् पूर्वं स्यात् ॥

प्रकाश

अचित्त्वेति । एतच्च कारणवाक्येषु सर्वत्र जड नोच्यत इत्यर्थसमर्थनपरत्व एवास्य अधिकरणस्य सम्भवतीति भाव । ननु कारणवाक्यमात्राबोध्यस्यानुमानादिना कारणत्वसिद्धिरित्याशङ्क्य, समाधिमाह—न चेति । चतुर्थं प्रत्याह—नापीति । पञ्चमषष्ठौ प्रत्याचष्टे—नापि प्रधानस्येति । पुनरुक्तेश्चेति । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यत्र कर्तृत्वे सत्युपादानत्वस्य ब्रह्मण एवोक्तत्वादिति भाव । अधिकरणक्रम निराह—किञ्चेति । चतु-

चन्द्रिका

यादवप्रकाशीये तु—"स्वाप्ययात्" इत्यस्य "सता सोम्य तदा सम्पन्नो भवति" इति वाक्यं विषयः, "गतिसामान्यात्" इत्यस्य तु "सति सम्पद्य न विदुः सति सम्पत्स्यामहे" इति वाक्यं विषय इत्युक्तम्। तन्न, वाक्यभेदेन सूत्रभेदे अतिप्रसङ्गात्।

प्रकाशः

रधिकरण्याः "व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्यं" इत्यादिनाऽऽरम्भार्थत्वोक्तेरस्यापि तदन्तर्भावः। तत्रापि शास्त्रयोनिसूत्रेणैकार्थ्यात्तदानन्तर्यमेव स्यात्। तथा च पञ्चानामपि तदारम्भोपयुक्तत्वमेवापन्नमिति भावः।

उक्तमतद्वयदूषणेनैव यादवप्रकाशाधिकरणप्रमेयमपि निरस्तप्रायं मन्वानोऽधिकं वक्तुमाह – **यादवेति**। एकार्थकवाक्यभेदमात्रेण सूत्रभेदे जिज्ञासादिसूत्रभेदस्स्यात्, जिज्ञासावाक्यानां कारणादिवाक्यानां च नानात्वादित्यर्थः।

एतेन–"सदेव" इत्यादौ "बहु स्यां" इति परिणामश्रवणात्साङ्ख्योक्तं प्रधानमिति प्राप्ते, ईक्षणात्मश्रुत्यादेः शिव एव सत्पदवाच्यं कारणमिति सिद्धान्त इति केनचिदुक्तं निरस्तम्। समन्वयासङ्गतेः। 'सदीक्षतेः' इति विन्यासापत्तेश्च। शिवकारणत्वस्योक्तवक्ष्यमाणानेकमानैः, पत्युरधिकरणेन च विरोधाच्च। "ईक्षतिकर्म" इत्यत्रास्य वाक्यस्य विष्णुपरतायाः वक्ष्यमाणत्वाच्च।

सर्वोत्तमत्वात्सन्नामा हरिर्नारायणः प्रभुः।

चन्द्रिका

टीकाक्षरार्थस्तु—न तच्छन्दगोचरमिति युक्तमिति । उपलक्षणं चैतत्—शब्दानां 'गवां' ज्ञानानां च 'चरः' चरणं वृत्तिर्यस्मिन् तत् शब्दगोचरमिति व्यधिकरणबहुव्रीहिं वा, 'चरः' चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वाऽऽश्रित्य 'शब्दगोचरं' इत्यस्य साधुत्वं द्रष्टव्यम् । ततश्च "यतो वाचः" इत्यादिश्रुतौ "मनसा सह" इत्यदृश्यत्वस्याप्युक्तत्वादीक्षणीयत्वमसिद्धमिति पूर्वप-

प्रकाशः

न केवलं टीकोक्तदिशा प्रयोगवशादेव साधुत्वम्, किन्तु "यदि तत्स्यादगोचरम्" इत्यनुव्याख्यानसुधोक्तदिशाऽवयववृत्त्या विशेष्यनिघ्नतयाऽपीति भावेनाह—उपलक्षणमिति । 'गवां' इत्यस्यार्थो ज्ञानानामिति । चरश्चरणमिति । चरतेः, तृतीये "ग्रहवृदृनिश्चिगमश्च" इतिसूत्रे "घञर्थे कविधानम्" इति वार्तिकोक्तच्, कप्रत्यये रूपम् । "गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च" इति सूत्रे मञ्जर्यां "रूढिशब्दोऽयं विषयपर्यायस्तस्य यथा कथं चिन्निर्वचनम्" इत्युक्तेरिति भावः । व्यधिकरणेति । "सप्तमीविशेषणे बहुव्रीहौ" इत्यत्र द्वितीये ज्ञापितत्वादिति भावः । अच्प्रत्ययेति । "अर्शआदिभ्योऽच्" इति सूत्रादिति भावः । तेन "गवां ज्ञानानां चरो वृत्तिरस्मिन्निति गोचरं" इति सुधावाक्यं द्वेधा योज्यमित्युक्तं भवति । एवमाश्रयणस्य फलान्तरमप्याह— ततश्चेति । अत एव सिद्धान्ते अज्ञेयत्वस्य गत्युक्तिर्माध्ये इति भावः । एतेन कस्य

प्रकाशः

इत्यादिना छान्दोग्यभाष्ये षष्ठे प्रमाणेनैवास्य वाक्यस्य विष्णुपरतया व्याख्यातत्वाच्च ।

तेजोऽभिमानवान् ब्रह्मा वायुश्चाबभिमानवान् ।

रुद्रः क्षित्यभिमानी चाप्येतन्मयमिदं जगत् ॥

इत्यादिना "इत्यादि ब्रह्माण्डे" इत्यन्तेन बृहदारण्यकभाष्ये प्रथमेऽध्यायेऽस्यप्रकरणस्य विष्णुपरतायाः स्पष्टमुक्तत्वाच्च । "साधुत्वात्सन् हरिः स्मृतः" इत्याद्यनेकप्रमाणोदाहरणेनास्य प्रकरणस्य विष्णुपरतायास्तत्त्वनिर्णयेऽप्युक्तत्वाच्च । कारणत्वोपादानत्वयोः प्रधाने सत्त्वेन तन्निरासायोगाच्च । कर्तृत्वस्य साङ्ख्येनानङ्गीकाराच्च । केवलप्रधाने तयोरभावे केवले शिवे तदभावस्य सुवचत्वाच्च । अशब्दमानुमानिकं प्रधानं न जगत्कारणमित्यध्याहाराद्यापाताच्च । 'गौणः' इति पुल्लिङ्गायोगाच्च । प्रागुक्तवचनैर्भाष्योक्तदिशा चात्मशब्दस्य विष्णावेव मुख्यतया शिवपरत्वायोगाच्च । यदपि, माऽस्त्वचेतनं सत्पदवाच्यं, जीवस्तु स्यादीक्षणात्मशब्दादेस्तत्र सम्भवादित्यतः "तन्निष्ठ" इति सूत्रमिति, तदपि न, "बहु स्यां" इति प्रथमश्रुतबहुभवनविरोधेन जीवशङ्काऽनुदयात् । साङ्ख्येषु जीवकारणत्वानङ्गीकाराच्च । शिवस्यापि प्रागुक्तदिशा जन्मादिमत्तया जीवत्वेन "परो हि पुरुषो विष्णुस्तस्मान्मोक्षः" इति भाष्योक्तस्मृतिविरोधेन तन्निष्ठस्य मोक्षायोगाच्च । सूत्रान्तराण्यप्युक्तदिशा दूषितप्रायाणीति यत्किञ्चिदेतत् ॥

चन्द्रिका

टीकाक्षरार्थस्तु—न तच्छब्दगोचरमिति युक्तमिति । उपलक्षणं चैतत्–शब्दानां 'गवां' ज्ञानानां च 'चरः' चरणं वृत्तिर्यस्मिन् तत् शब्दगोचरमिति व्यधिकरणबहुव्रीहिं वा, 'चरः' चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वाऽऽश्रित्य 'शब्दगोचरं' इत्यस्य साधुत्वं द्रष्टव्यम् । ततश्च "यतो वाचः" इत्यादिश्रुतौ "मनसा सह" इत्यदृश्यत्वस्याप्युक्तत्वादीक्षणीयत्वमसिद्धमिति पूर्वप-

प्रकाश

न केवलं टीकोक्तदिशा प्रयोगवशादेव साधुत्वम्, किन्तु "यदि तत्स्यादगोचरम्" इत्यनुव्याख्यानसुधोक्तदिशाऽवयववृत्त्या विशेष्यनिघ्नतयाऽपीति भावेनाह—उपलक्षणमिति । 'गवा' इत्यस्यार्थो ज्ञानानामिति । चरश्चरणमिति । चरतेः, तृतीये "ग्रहवृद्दनिश्चिगमश्च" इतिसूत्रे "वनर्थे कविधानम्" इति वार्तिकोक्तच् कप्रत्यये रूपम् । "गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च" इति सूत्रे मञ्जर्यां "रूढिशब्दोऽयं विषयपर्यायस्तस्य यथा कथं निर्विर्वचनम्" इत्युक्तेरिति भावः । व्यधिकरणेति । "सप्तमीविशेषणे बहुव्रीहौ" इत्यत्र द्वितीये ज्ञापितत्वादिति भाव. । अच्प्रत्ययेति । "अर्श आदिभ्योऽच्" इति सूत्रादिति भावः । तेन "गवां ज्ञानान चरो वृत्तिरस्मिन्निति गोचरं" इतिं सुधावाक्यं द्वेधा योज्यमित्युक्तं भवति । एवमाश्रयणस्य फलान्तरमप्याह— ततश्चेति । अत एव सिद्धान्ते अज्ञेयत्वस्य गत्युक्तिर्भाव्ये इति भावः । एतेन कस्य

चन्द्रिका

क्षयभिप्रायः। पूर्वमर्थापत्तिपरतया व्याख्यातमिदानीं परिशेषपरतया व्याचष्टे—परिशेषप्रमाणेन वा इति। यद्यपि स्वमते अर्थापत्तिपरिशेषयोरनुमानता, तथापि तयोर्भेदमुपेत्य वा अनुमानत्वावान्तरभेदमाश्रित्य वा पक्षान्तरोक्तिः। श्रुतिस्मृती चाहेति। श्रुतौ 'आमनन्ति' इति साक्षाद्वाच्यत्वोक्ते, स्मृतौच 'अहमेव' इत्यवधारणोपपत्तये मुख्यतया वेद्यत्वस्य विवक्षणीयत्वात्, तस्य च वाच्यत्वं विनाऽयोगात्, सर्ववेदलक्षणाया अयोग्यत्वाच्च वाच्यत्व

प्रकाशः

चिदसाधुत्वकल्पनं प्रत्युक्तं बोध्यम्, अकुशलता च भाष्यकृतो निरस्ता। एतत्प्रयोजनाशयेन तदुक्तेरिति। 'परिशेष' इत्यादिरुद्ग्रन्थत्वभ्रमं निराह—पूर्वमिति। 'औपनिपदत्वात् इति भाष्यं' इति शेषः। भेदमिति। पररीत्येति भाव.। ननु 'अवाच्यत्वनिरासाय श्रुतिस्मृती चाह' इति टीका न युक्ता, श्रुत्यादौ वाच्यत्वस्यावाच्यत्वनिरासस्य वाऽप्रतीतेरित्यत आह—श्रुतीति। आद्ये मुख्यार्थत्वादिति भावः। अवधारणेति। स्वस्यामुख्यत्वे मुख्यान्तरे वा सति, तदयोगादिति भावः। ननु सर्वैर्वेदैरहमेव लक्षणया वेद्य इत्यर्थः स्यादित्यत आह—सर्वेति। अनवस्थापातादिति भाव। ननु "किं च मायया" इति टीका न युक्ता, प्राग्विशिष्टस्यैवेक्षितृत्वोक्त्या मायया शुद्धस्येक्षणमित्यस्यानुक्त्या विकल्पानवकाशात्, विशिष्टस्यैवेत्थं विकल्पे "आद्ये दृश्यत्वाद्यपि किं न स्यात्" इति

चन्द्रिका

सिद्धिरिति भावः । ननु न विशिष्टमीक्षितृ, येन जिज्ञास्यत्वायोगः । किन्तु शुद्धमेव मायासम्बन्धादीक्षित्रिति पूर्वत्रारुच्या दोषान्तरमाह—किं च माययेक्षणमिति । "गौणग्रहणे बाधकस्य" इत्यादौ गौणशब्देन "मुख्यासम्भवे गौणाश्रयणात्" इत्यत्रेव अमुख्यार्थो न विवक्षितः, किन्तु सत्त्वादिगुणयुक्तजीवरूपमुख्यार्थ इति द्रष्टव्यम् । स्वरूपप्रतिमारूपाभिप्राय इति । आत्मनि स्वरूपाभिप्रायः, अनात्मनि प्रतिमारूपाभिप्राय इत्यर्थः । श्रुतेरार्जवसम्भवादिति । आत्मानात्मशब्दयोश्चेतनाचेतनविषयतया प्रसिद्धेः रूपशब्देऽनेकार्थत्वस्याकल्प्यत्वाच्च, तद्विषयत्वे श्रुतेरार्जवं सम्भवतीत्यर्थः । स्वभावविषयत्वोपपत्तेरिति । जीवात्मन्यपि हि दुःखादिदोष औपाधिक एवेति भावः । "यस्य" इति श्रुतौ विश्वशब्दो "विश्वो हिरण्यगर्भोऽग्निर्यमः" इत्यादाविव वाच्यर्थः । तेन

प्रकाशः

अन्यायोगादित्यत आह—नन्विति । एतेन 'ईक्षणं' इत्यस्येक्षित्रित्यर्थ उक्तो भवति । "गौणग्रहणे" इत्यत्र गौणपदस्यामुख्यार्थत्वे पूर्वोत्तरासङ्गतेराह—गौणेति । स्वरूपेति । कस्य स्वरूपत्वादीत्यत आह—स्वरूपेति । अस्फुटत्वादार्जवं व्यनक्ति—आत्मेति । 'तद्विषयत्वे' चेतनाचेतनविषयत्वे ।स्वभावस्य सदोषत्वानुभवात् कथं निर्दोषत्वमित्यत आह—स्वभावेति । 'वायुकर्ता' इत्यादीनां व्याख्येयादृष्टेराह—यस्येति । विश्व इति । "रूपोपन्यासात्" इत्यत्र भा-

चन्द्रिका

'सर्वस्य कर्ता' इत्यनेन न पुनरुक्तमित्याह—**वायुकर्तेति** । प्रतिबुद्धशब्दार्थमाह—**सर्वज्ञ इति** । अनुवित्तशब्दार्थमाह—**ज्ञात इति** । ततश्च तयोर्न पौनरुक्त्यमिति भावः । **न सपक्षसत्त्वमिति** । "ततश्च नासाधारणानैकान्तिकता" इति शेषः । **केवलान्वयिनीति** । केवलान्वयी दृष्टान्ततयोक्तः, ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वय्युपयोगितया वा । **तदविनाभाव्यभावत्वाभावादिति** । साध्याभावाविनाभूताभावप्रतियोगिन एवोपाधित्वादिति भावः । **व्याप्त्यनिश्चयादिति** । साध्यव्यापकत्वानिश्चयादित्यर्थः । कार्यकारणभावादेरेव व्याप्तिनिबन्धनत्वे तदभावात् द्रव्यत्वसंयोगित्वयोरपि सा न स्यादित्याह—**द्रव्यत्वसंयोगित्वयोरिति** ।

प्रकाशः

व्योक्तश्रुतौ यथा तथेत्यर्थः । "सर्वपदार्थानां लक्षणायोग्यत्वान्न सपक्षसत्त्वं" इत्यस्योपयोगादृष्टेराह—**ततश्चेति** । केवलव्यतिरेकिण एव प्रस्तुतत्वात् "केवलान्वयिनि केवलव्यतिरेकिणि चोपाधिशङ्कानुदयात्" इति कथमित्यत आह—**केवलान्वयिनीतीति** । **ब्रह्मेति** । टीकायां केवलव्यतिरेकिप्रदर्शनमुपलक्षणमिति भावः । कथमनेन हेतुना केवलान्वयिन्युपाधिशङ्कानुदय इत्यत आह—**तदिति** । "व्याप्त्यनिश्चयात्" इति हेतुसाध्ययोरिति भ्रमं निवारयति—**साध्येति** । 'किंनिबन्धना' इति सामान्यशब्दस्याभिप्रायमाह—**कार्येति** । 'अवाच्यस्य' इति ग्रन्थस्यानन्वयमाशङ्क्याह—

चन्द्रिका

ननु संयोगितायाः द्रव्यत्वावच्छेद्यत्वहानिरेव विपक्षे बाधिका तयोर्व्याप्तिनिबन्धनमित्याशङ्क्य, तर्हीहापि अनवस्था विपक्षे बाधिकेत्यभिप्रेत्याह—**अवाच्यस्य लक्षणायामित्यादिना** । ननु सत्यज्ञानादिवाक्ये लक्ष्यार्थकं ब्रह्मपदं वाचकमेव, सत्यादीनि लक्षणपदानि तु न वाचकानीति शङ्कते—**लक्ष्यपरपदस्येति** ।

प्रकाशः

**नन्विति** । "लक्ष्यपरपदस्य" इति शङ्काभिप्रायं दुर्गमत्वादाह—**नन्विति** । शिष्टं स्पष्टमिति भावः । सूत्रार्थस्तु—'तत्' ब्रह्म 'अशब्दं' अवाच्यं न, ईक्षणीयत्वात्, किन्तु वाच्यमेवेति । ननु लाघवादीक्षतेर्वाच्यमित्येव कुतो नोक्तमिति चेत्, "अशब्दमस्पर्शं" इति श्रुत्यनुगमायेत्यवेहि । परपक्षनिरासस्वपक्षस्थापनयोर्द्वयोरपि लाभाय चेति ।

॥ इति ईक्षत्यधिकरणम् ॥

---

# —अथ आनन्दमयाधिकरणम्—

तमेव समन्वयं प्रकटयति—

## आनन्दमयोऽभ्यासात्

इत्यादिना समस्तेनाध्यायेन प्रायेण । प्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे ।

तत्त्वप्रकाशिका

अथ ब्रह्मस्वरूपनिरूपणेऽनवशेषात्किमध्यायशेषेणेत्यतः तत्कृत्यमाह—तमेवेति । कृत्यान्तराभावेऽपि "तत्तु समन्वयात्" इत्युक्तमेवोपक्रमाद्यन्वयात्सम्यङ्निरूपणं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेन प्रकटयत्यनेनाध्यायेन सूत्रकारः । अन्यथा प्रतिज्ञामात्रस्यासाधकत्वेन 'अन्यदेव समन्वयात्' इत्यपि वक्तुं शक्यत्वादिति भावः । एतदधिकरणसङ्गतिशङ्कोत्थापनाय सूत्रोदाहरणम् । चतुर्थपादे तु न समन्वय इत्येतदश्रद्धेयमिति भावेनोक्तम्—समस्तेनेति । 'प्रायेण' इति देवताद्यधिकरणव्यावृत्तये । तर्ह्यध्यायस्यैकार्थत्वात्पादभेदः किंनिबन्धन इत्यतः, समन्वयेऽप्यवान्तरभेदेनेति भावेनैतत्पादप्रतिपाद्यं दर्शयति—प्रायेणेति । शब्दास्तावच्चतुर्विधाः । अन्यत्रैव प्रसिद्धाः उभयत्र प्रसिद्धाः अन्यत्र प्रसिद्धाः तत्र प्रसिद्धा इति । सर्वेऽपि नामलिङ्गात्मकतया प्रत्येकं द्विविधाः । तेषु न तत्र प्रसिद्धाना समन्वयो वाच्यः । तेष्वन्यत्रैव प्रसिद्धशब्दसमन्वयस्य प्रथममबुद्ध्यारोहाच्चतुर्थे तदुक्तिः । उभयत्र प्रसिद्धानामन्यत्र प्रसिद्धिपरा-

नान्यथा, तददृष्टेः । ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयावयवरूपं प्रतीयते ।

तत्त्वप्रकाशिका

करणमात्रस्यान्यत्र प्रसिद्धानां तत्प्रसिद्धिनिराकरणपूर्वकं भगवत्परत्वप्रतिपादनादमुख्यत्वेन प्राथम्यायोगात्तृतीये तदुक्तिः । अन्यपराणां मध्ये लिङ्गात्मकानां धर्मवाचित्वान्नामात्मकेभ्यो धर्मिवाचिभ्योऽमुख्यत्वेनाप्राथम्यात्तत्समन्वयोक्तिर्द्वितीये । ततोऽन्यत्र प्रसिद्धानां नामात्मकाना शब्दानां भगवति समन्वयः प्रदर्श्यतेऽस्मिन् पाद इति भावः । अत्रान्तस्स्थत्वलिङ्गसमन्वयप्रतिपादनात् 'प्रायेण' इति।अन्ये तु ब्रह्मनिष्ठतया स्पष्टलिङ्गानां प्रथमे, द्वितीयतृतीययोरस्पष्टानां समन्वयः प्रतिपाद्यत इत्यन्यथा पादार्थानाचक्षते, तन्निराचष्टे—नान्यथेति । "एतदमृतमभयमेतद्ब्रह्म" इत्युत्तराधिकरणोदाहृतवाक्येष्वपि स्पष्टब्रह्मलिङ्गानामुपलम्भेन तन्नियमादृष्टेर्नान्यथा पादार्थ इत्यर्थः । नन्वत्रान्यत्र प्रसिद्धानन्दमयनाम्नो ब्रह्मणि समन्वयसमर्थनादस्तु शास्त्राध्यायपादसङ्गतिः । तथाऽप्यानन्दमयस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरित्यतः श्रुत्यधिकरणसङ्गती दर्शयति–ब्रह्मेति । "अथातो ब्रह्मजिज्ञासा" इति यस्य ब्रह्मणो जिज्ञासा कर्तव्यतयोक्ता, तच्च ब्रह्म तैत्तिरीयश्रुतावानन्दमयस्य पुच्छाख्यावयवरूपं प्रतीयते, "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतां अन्वयं पुरुषविधः । तस्य

न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयतेत्यत आह। आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा।

तत्त्वप्रकाशिका

प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा" इति। अतस्सङ्गतिसद्भावादानन्दमयस्य ब्रह्मत्वमत्र समर्थ्यत इति भावः। 'तेन' आनन्दमयेन 'एषः' विज्ञानमयो- निश्छिद्रतया पूर्णः, 'स एष' आनन्दमय पुरुषाकार एव, 'तस्य' आनन्द मयस्य पुरुषाकारतानुसारेण 'अयं' विज्ञानमयः पुरुषाकारस्तस्मादुद्भूतः। उपकारजं प्रियं, प्रकृष्टाप्रकृष्टविषयोत्थौ मोदप्रमोदौ, स्वरूपभूत आनन्दः। यद्वा श्रवणोत्थं प्रियं, दर्शनोत्थो मोदः, भोगोत्थः प्रमोदः, स्वरूपभूत आनन्दः, तत्तत्प्रवर्तकतया च तत्तद्व्यपदेश इति। ब्रह्मणोऽवयवत्वोक्तावपि किमर्थमानन्दमयस्य विष्णुत्वसमर्थनमित्यत आह—न हीति। यद्यानन्दमयो ब्रह्मणोऽन्यस्तदा न ब्रह्मजिज्ञासा सम्भवति, अवयविन एवानन्दमयस्य जिज्ञास्यत्वप्राप्ते, अवयविजिज्ञासां विना अवयवजिज्ञासाऽयोगात्। ब्रह्मजिज्ञासा च श्रुत्युक्ता न हातुं शक्या। अत आनन्दमयस्य विष्णोरन्यत्वे न ब्रह्मजिज्ञासा सम्भवतीति यतोऽतो ब्रह्मजिज्ञासासिद्ध्यर्थं "आनन्दमयोऽभ्यासात्" इत्यानन्दमयस्य विष्णुत्वमाह सूत्रकार इति भावः। एवं सङ्गतिमुक्त्वा विषयसंशयौ दर्शयति—आनन्दमय इति। अत्रानन्दमयो विषयः। स किं ब्रह्मादिजीवसमूहः, उत चेतनप्रकृतिः,

ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः, शतानन्दनाम्ना च। अष्टमूर्तित्वात्सूर्ये मोक्तत्वाच रुद्रस्य। एवमन्येषामपि। "मम योनिर्महद्ब्रह्म" इति ब्रह्मशब्दाद्बहुभावाच्च प्रकृतेः। "बृह जातिजीवकमलासनशब्दराशिषु" इति ब्रह्मशब्दादेव सर्वजीवानां, अन्नमयत्वादेश्च।

तत्त्वप्रकाशिका

अथाचेतना, किं वा विष्णु', "ब्रह्माणि जीवाः" "मम योनिर्महद्ब्रह्म" "पञ्चभिः पञ्चभिर्ब्रह्म" इत्यादिना जीवादिषु ब्रह्मशब्दप्रयोगः सन्देहबीजमिति भावः। तत्र सयुक्तिकं पूर्वपक्षमाह—ब्रह्मशब्दादित्यादिना। आनन्दमयमधिकृत्य "अस्ति ब्रह्मेति चेद्वेद" इति हिरण्यगर्भनिष्ठब्रह्मशब्दश्रवणात् तस्यानन्दमयत्वं युज्यते। ब्रह्मशब्दस्यान्यत्रापि वृत्तेः कथं तेन तन्निश्चय इति चेत्, आनन्दमयशब्दार्थवच्छतानन्दनाम्ना च हिरण्यगर्भे विद्यमानेन तस्य प्राप्तिः। रुद्रस्य वाऽऽनन्दमयत्वप्राप्तिः, "यश्चासावादित्ये" इत्यानन्दमयस्य सूर्ये प्रोक्तत्वाद्रुद्रस्य सूर्याद्यष्टमूर्तित्वात्। तथा च विष्णुपुराणे—

सूर्यो जलं मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणस्सोम इत्येतास्तनवः क्रमात्॥

इति। एवमिन्द्रबृहस्पत्यादीनामपि सूर्याधिष्ठातृत्वादिनाऽऽनन्दमयत्वप्राप्तिः। चित्प्रकृतेर्वा आनन्दमयत्वप्राप्ति', आनन्दमयनिष्ठब्रह्मशब्दस्य "मम योनिर्महद्ब्रह्म" इति चित्प्रकृतौ प्रयोगात्। कथं सावकाशब्रह्मशब्देनायं निर्णय इति चेत्, "सो कामयत बहु स्यां" इत्या-

तथाऽपि न त आनन्दमयशब्देनोच्यन्ते । किन्तु विष्णुरेव, "तदेव ब्रह्म परमं कवीनाम्" "एतमेव ब्रह्मेत्याचक्षते" ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।

तत्त्वप्रकाशिका

नन्दमयस्य बहुभावश्रवणात्, तदभिमानित्वाच्चित्प्रकृते । अचित्प्रकृतेर्वाऽऽनन्दमयत्वप्राप्तिः, बहुभावादेव । तत्तद्देहगतसर्वजीवानां वाऽऽनन्दमयत्वप्राप्ति, "बृह जातिजीवकमलासनशब्दराशिषु" इति धातोर्जीवेष्वपि ब्रह्मशब्दात् । न च वाच्यम् ब्रह्मशब्दस्य साधारण्यान्न निश्चायकत्वमिति, 'अन्नरसमयः' 'प्राणमयः' इत्युक्तान्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वात् तत्प्रायपठितानन्दमयत्वेऽपि जीवानां प्राप्तेः । यद्यपि ब्रह्मशब्देन विष्णोरप्यस्ति प्राप्तिस्तथाऽपि नासावानन्दमयः, विष्णोरानन्दमयावयवत्वोक्तेः, तस्य चानन्दमयत्वे तदवयवत्वविरोधात् । तथाचाऽऽनन्दमयस्याब्रह्मत्वेन न तदवयवब्रह्मजिज्ञासा सम्भवतीत्याशय । सिद्धान्तयति—तथापीति । यद्यप्येवमन्येषां प्राप्तिस्तथाऽपीत्यर्थ । कस्तर्हीत्याशङ्क्य सङ्गत्यर्थमुदाहृतसूत्रप्रतिज्ञाभागं व्याचष्टे—किन्त्विति । कुतो विष्णुरेवानन्दमय इत्यतस्सौत्रं हेतुं व्याचष्टे—तदेवेति ।

असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।

अस्ति ब्रह्मेति चेद्वेद ।

इत्यानन्दमये ब्रह्मशब्दाभ्यासाद्विष्णुरेवानन्दमय, ब्रह्मशब्दस्य

असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ॥
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ॥

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥

**॥ ओम् विकारशब्दान्नेति चेन्न प्राचुर्यात् ओम् ॥**

विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्शब्दः, न तु परमात्मन इति मा भूत्, प्रचुरानन्दत्वाद्ध्यानन्दमयः, न तु तद्विकारत्वात् ।

तत्त्वप्रकाशिका

"तदेव ब्रह्म" इत्यादिश्रुतिस्मृतिषु विष्ण्वेकनिष्ठत्वोक्तेः । न च तत एव हिरण्यगर्भादीनां प्राप्तिरशङ्क्या, तेषामपूर्णत्वेन ब्रह्मशब्दमुख्यार्थत्वाभावस्याप्युदाहृतश्रुत्यादिसिद्धत्वात्, मुख्यार्थत्यागेन अमुख्यार्थग्रहणायोगादिति भावः ॥

उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वा व्याचष्टे—विकारेति । नायमानन्दमयो विष्णुः, किन्तु प्रागुक्तप्रकृत्यादय एव, विकाराभिधायकमयट्शब्दप्रयोगात् । विकारार्थशब्दवाच्यत्वं हि विकारित्वविकाराभिमानित्वाभ्यां सम्भवति । तथा च विकारात्मकत्वादचित्प्रकृतेश्चेतनप्रकृत्यादीनां विकाराभिमानित्वात्तेषु मयट्शब्दो युज्यते, न विष्णोः, तस्याविकारित्वादतदभिमानित्वाच्चेति शङ्का मा भूत्, यतः प्रचुरानन्दत्वादानन्दमयपदेनानन्दमयः कथ्यते, न त्वानन्दविकारत्वात्।

अन्नादीनां च प्राचुर्यमेव । "अद्यतेऽत्ति च" इति व्याख्याना-त्तत्प्राचुर्यं च युज्यते ।

तत्त्वप्रकाशिका

तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा ।

इति प्राचुर्येऽपि मयट्प्रयोगादिति भावः । 'आनन्दप्रचुर' इति यद्युच्यते 'ब्राह्मणप्रचुरो ग्रामः' इत्यादिवदनानन्दस्यापि प्राप्तिः 'प्रचुरानन्दः' इति विपरीतसमासः कृतः । 'प्रचुरानन्दः' इत्य-भिधाने पूर्णानन्द इत्येव प्रतीतिः । नायमानन्दमयशब्दः प्रचुरान-न्दतामभिधत्ते, किन्तु विकारार्थत्वमेव, अन्नादिविकारार्थान्नमयादि-शब्दैस्सह पठितत्वादित्यत आह—**अन्नादीनां** चेति । भवेत्प्रायपा-ठविरोधो यद्यानन्दमयपदेनैवानन्दप्राचुर्यमुच्यत इत्यभ्युपगति । ना सावस्ति, अन्नादीना च प्राचुर्यमेव अन्नमयादिशब्दार्थ इत्यभ्युप-गमादिति भावः । ननु कथमत्रान्नमयशब्दोऽन्नप्राचुर्यार्थे, अन्नप्राचु-र्यकथनस्यात्यल्पत्वादित्यत आह—**अद्यत** इति । अन्नप्राचुर्यचा-न्नमयशब्दार्थो युज्यते, अत्रान्नशब्देन भूताद्यत्वतदत्तृत्वस्याभिधानेना-ल्पार्थत्वाभावात् । प्रसिद्धान्नार्थत्व एव तत्प्राप्ति. । कुतोऽयमन्नशब्दार्थो न प्रसिद्धान्नं, येनाल्पार्थत्वाभाव,

अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ।

इत्यन्नशब्दव्याख्यानात्प्रसिद्धान्नस्य भूतात्तृत्वायोगादिति भाव. ।

उपजीव्यत्वमेवाद्यत्वम् । "स वा एषः" इत्यन्यप्रारम्भात् । "येऽन्नं ब्रह्मोपासते" इत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्च न विकारित्वमविरोधश्च ।

तत्त्वप्रकाशिका

ननु प्रचुरभूताद्यत्वं कथमभिसंहितं ब्रह्मण इत्यत आह—उपजीव्यत्वमेवेति । "ओषधीभ्योऽन्नं, अन्नात्पुरुषः" इति प्रसिद्धान्नविकारदेहमुक्त्वा "स वा एष पुरुषोऽन्नरसमयः" इति तत्परामर्शात्कथमन्नमयशब्दः तत्प्राचुर्यार्थ इत्यत आह—स इति । भवेदेतद्यदि प्रसिद्धान्नविकारपुरुषपरामर्शोऽयं भवेत् । न चैवं, यस्मादात्मन आकाशादिकमुत्पन्नं स एष इत्यात्मपरामर्शोपपत्तेरित्यर्थः । किमर्थमसौ परामृश्यत इत्याशङ्कापनोदाय परामर्शादिति वक्तव्ये 'प्रारम्भात्' इत्याह । आत्मनआकाशादिकारणत्वमुक्त्वा तस्यैवान्नमयादिपञ्चरूपत्वंप्रदर्शनाय पुनः प्रक्रान्तत्वान्न तत्परामर्शवैयर्थ्यमिति भावः । एवं प्राणमनश्शब्दयोश्चेष्टकत्वावबोधार्थत्वेन प्राचुर्यार्थतयाऽल्पार्थता परिहरणीयेति । नन्वेवं मयट्शब्दस्योभयार्थे प्रयोगादत्राप्युभयपक्षे दोषादर्शनात्किं प्राचुर्यमेवार्थो न विकारित्वं पञ्चमयटामित्यत्र नियामकम्।अन्नमयादिपञ्चानां ब्रह्मताऽभ्युपगतौ "एकमेवाद्वितीयं" इत्यादिश्रुतिविरोधश्च स्यादित्यत आह—येऽन्नमिति । "येऽन्नं ब्रह्मोपासते" "ये प्राणं ब्रह्मोपासते" "आनन्दं ब्रह्मणो विद्वान्" "विज्ञानं ब्रह्म चेद्वेद" "अस्ति ब्रह्मेति चेद्वेद" इत्यन्नमयादीन् प्रत्युदाहृतश्लोकेषु तद्वि

न च पृथक्कल्पना युक्ता ।

तत्त्वप्रकाशिका

पयत्वेन ब्रह्मशब्दश्रवणादुभयथाऽपि सम्भवतां मयटामनन्यथासिद्धतत्समभिव्याहारान्न विकारित्वमर्थोऽपि तु प्राचुर्यमेवेति निश्चीयते । न चान्नमयादीनां पञ्चानामपि ब्रह्मत्वाभ्युपगतौ "एकमेवाद्वितीयं" इत्यादिश्रुतिविरोधः, एकस्यैव ब्रह्मणो बहुरूपत्वेन पञ्चत्वोपपत्त्या श्रुत्यविरोधादिति भावः । एवमन्नमयादिपञ्चकमपि ब्रह्म, तद्गतमयटां प्राचुर्यार्थतैव, सावकाशस्य निरवकाशब्रह्मशब्दबलादेकार्थत्वोपपत्तिरित्युक्तम् । अन्ये तु आनन्दमय एव ब्रह्म, तद्गतमयट एव प्राचुर्यार्थतेति कल्पयन्ति । तदयुक्तमित्याह—न चेति । न चेयं कल्पना युक्ता, प्रायपठितमयटामर्थद्वैविध्यकल्पनस्य क्लिष्टत्वात् । ततश्चैकस्यैव ब्रह्मत्वं क्लिष्टमिति भावः । न च सूत्रविरोधः । यदा खलु ब्रह्मशब्दादानन्दमयस्य ब्रह्मतामसाधयत्सूत्रकारस्तदा ब्रह्मशब्दवतामन्नमयादीनां च ब्रह्मतामनुजज्ञे । तथैव द्वितीयं सूत्रं नेयम् । अन्यथाऽन्नमयादिषु सन्नपि ब्रह्मशब्दो ब्रह्मतामसाधयन् कथमानन्दमयस्यापि साधयेत् । कथं चान्नमयादिषु स्थितौ मयट्शब्दः प्राचुर्यार्थतामलभमानः आनन्दमये श्रुतौ लभेत । न चास्ति तत्र बाधकविशेषो येन द्वैविध्यं कल्प्येत । अन्नमयादीनामपि तर्हि ब्रह्मतां किं नासूत्रयदिति चेत्, सूत्रस्याल्पाक्षरत्वादेव । आदिमत्वेऽप्यन्नमयादीनामानन्दमयस्य सङ्गतत्वेन ग्रहणम् । यस्त्वन्नमयादीनां

स्वरूपे च युज्यते 'प्रचुरप्रकाशो रविः' इतिवत् ।

॥ ओम् तद्धेतुव्यपदेशाच्च ओम् ॥

"कोह्येवान्यत्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्" इति ॥

तत्त्वप्रकाशिका

पञ्चानामप्यब्रह्मतां ब्रूते, स तु सूत्रकारेणैव पूर्वपक्षीकृत इति न तत्पक्षं प्रत्याक्षिपद्भाष्यकारः । नन्वानन्दादिस्वरूपस्य ब्रह्मणः कथं प्रचुरानन्दत्वादिकं 'घृतप्रचुरओदनः' इत्यादौ भेदएव प्रयोगादित्यत आह—स्वरूपे चेति । यथा प्रकाशस्वरूपेऽपि रविबिम्बे विशेषेण 'प्रचुरप्रकाशो रविः' इति व्यपदेशस्तथाऽऽनन्दादिरूपेऽपि हरौ विशेषेण तद्व्यपदेशो युज्यत इत्यर्थः ॥

एवं प्रचुरानन्दत्वेनानन्दमयपदवाच्यो विष्णुरेव, ब्रह्मशब्दाभ्यासादित्युक्तम् । तदेव हेत्वन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—तद्धेत्विति । आ समन्तात्काशमानो विष्णुर्यदि पूर्णानन्दो न स्यात्तदाऽसौ न लोकं प्रवर्तयेत्, आनन्दोद्रेकमन्तरेण तत्प्रवृत्तौ कारणाभावात् । तथा च को लोकं चेष्टयेद्धर्मादौ च कः प्रवर्तयेत्, अन्यस्यास्वातन्त्र्यात् । अतो लोकचेष्टान्यथानुपपत्त्या तत्कर्ता विष्णुः पूर्णानन्दः स्यादित्यानन्दमयप्रकरणे विष्णोरेवानन्दपूर्णत्व एव लोकचेष्टकत्वाख्यहेतुव्यपदेशाद्विष्णुरेव पूर्णानन्दतयाऽऽनन्दमय इति भावः ।

## ॥ ओम् मान्त्रवर्णिकमेव च गीयते ओम् ॥

"ब्रह्मविदाप्नोति परं" इति सूचयित्वा "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णलक्षितं परमेव ब्रह्म शब्दानुस-

तत्त्वप्रकाशिका

यदुक्तं ब्रह्मशब्दादन्नमयादीनां विष्णुत्वमिति, न तद्युक्तम्, ब्रह्मशब्दस्यापरब्रह्मण्युपपत्तेः, ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि विष्णोरानन्दमयावयवत्वोक्त्यादिनाऽमुख्यस्यैव ग्रहणोपपत्तेरित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—मान्त्रवर्णिकमेव चेति । नेदमानन्दमयादिपञ्चकं अपरं ब्रह्म, यतः "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णे लक्षणवत्तयोक्तं परमेव ब्रह्म अन्नमयादिशब्दपञ्चकेन गीयते । तत्कुत इत्यत उक्तम्—शब्दानुसन्धानादिति । सत्यज्ञानानन्तशब्दानामन्नमयादिशब्दाना चार्थानुसन्धाने सत्यैकार्थत्वप्रतीतेः । मन्त्रवर्णेऽपि 'ब्रह्म' इत्येवोक्तत्वात्कथं तदर्थभूतानामप्यन्नमयादिशब्दानां परब्रह्मार्थतेत्यत उक्तम्—ब्रह्मविदिति । "ब्रह्मविदाप्नोति परम्" इति सूचनया परब्रह्मतज्ज्ञानतत्प्राप्तिकथने, किं तत्परं ब्रह्म, कथं च तद्वेदनं, कीदृशी च तत्प्राप्तिरिति शङ्कात्रयमुदेति । तत्रादिशङ्कापनोदाय परब्रह्मणो लक्षणमुच्यते—सत्यमिति । "योवेद" इति वेदनं "सोश्नुते" इति प्राप्तिः । अतो मन्त्रवर्णे परं ब्रह्मैवोच्यत इति तदुक्तं परमेव ब्रह्म शब्दानुसन्धानादन्नमयादिशब्दैर्गीयत इति

न्धानाद्दीयते । न चावयवत्वविरोधः, "स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्" इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायां ।

शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।
प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ॥
नारायणोऽथ सन्दोहो वासुदेवशिरोऽपि वा ।
पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ॥
अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ।
ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने ॥

---

तत्त्वप्रकाशिका

नापरब्रह्मशङ्काऽत्रकार्येति भावः। चशब्दो विष्णोरानन्दमयत्वे युक्तिसमुच्चयार्थः। ननु कथं विष्णोरानन्दमयत्वम्, तस्यानन्दमयावयवत्वादवयविनश्चावयवत्वविरोधादित्यत आह—न चेति। न विष्णोरानन्दमयत्वे तदवयवत्वविरोधः, "स शिरः" इत्यादिश्रुतावयविन एवावयवत्वोक्तेरवयवाद्यभेदादिति भावः। अवयविनोऽवयवत्वं विरुद्धमित्याशङ्कां परिहर्तुं स्मृतिं चाह—शिर इति। अघटितघटकेश्वरशक्त्या नावयविनोऽवयवत्वं विरुद्धमित्यर्थः। किञ्च किं प्रमाणेनावयविनोऽवयवत्वं विरुद्धं, उतावयवी नावयवोऽवयवित्वाल्लोकवदिति तर्केण। नाद्यः, असिद्धत्वात्। द्वितीयं निराचष्टे—अतर्क्य इति।

अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा ।
इति बृहत्संहितायाम् । रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते ।

तत्त्वप्रकाशिका

अतर्क्यत्वात्कुतस्तस्मिंस्तर्कस्साधको बाधको वा भवेदित्यर्थः । अस्तु वा तस्य तर्क्यत्वं, तथाऽपि न तद्विरोधः, लोके परिमितशक्तित्वेन विरोधात्, विरोधोपयोगिपरिमितशक्तेरपरिमिते भगवत्यभावादिति भावेनाह—अप्रमेय इति । यदवादि "स वा एषः" इत्यन्यपरामर्शो न "अन्नात्पुरुष." इत्युक्तपरामर्श इति, तदयुक्तम्, आत्मनो दूरस्थत्वात् देहस्य समीपस्थत्वात् समीपोक्तपरित्यागेन दूरस्थपरामर्शग्रहणे कारणाभावात् । प्रकृतस्यैव पुरुषशब्देनोक्तेरात्मनस्तदभावाच्च । एकेनैव शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगादित्यत आह—रसेति । "स वा एषपुरुषः" इति वाक्येन ब्रह्मचैतन्यमेव परामृश्यते, न देहः । न च तस्य दूरोक्तिविरोधः, पुरुषपदेनाप्रकृतत्वविरोधश्च, यत आकाशादिपुरुषान्तशब्दैरुक्तमाकाशादिसारभूतं ब्रह्मचैतन्यमेव परामर्शवाक्येनोच्यते । एवं तर्हि पुरुषपदेन द्वयोरप्युक्तत्वादुभयपरामर्शोऽयमस्त्विति न वाच्यम्, किन्तु पुरुषसारभूतं ब्रह्मशब्दचैतन्यमात्रमेवान्यद्विहायोच्यते । कुत एतत्, 'रसशब्देन विशेषणात्' यथा "प्रकृतिं पुरुषं च" इति पुरुषशब्देन द्वयोः प्रकृतत्वेऽपि दुःखानुभवितृत्वविशेषणेन "पुरुषः

'इदं' इति च दृश्यमानसन्निहितत्वात् ।

तत्त्वप्रकाशिका

प्रकृतिस्थो हि" इति जीव एवोच्यते, एवं "अन्नात्पुरुषः" इत्युभयोः प्रकृतत्वेऽपि "स वा एष पुरुषोऽन्नरसमयः" इति सारान्नमयत्वविशेषणेन परमात्मपरामर्श एवेति ज्ञायत इति भावः । उक्तं च—

बहूनां सहनिर्देश एकयाऽभिधयैव तु ।
तयैवाऽभिधया तेषां परामृश्यैकमुच्यते ॥

इति । एतच्च सविस्तरमुक्तमुत्तरप्रस्थाने "ब्रह्मशब्दोदिते तस्मिन्" इत्यादिना । ननु "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति स्थानान्तरे प्रार्थितशुद्धीनामन्नमयादीनां कथं ब्रह्मतोच्यत इत्यतो वाऽऽह—रसेति । भवेदेतद्यदि प्रार्थितशुद्ध्योऽन्नमयादयोऽप्यत्रोच्यन्ते, नैतदस्ति । किन्तु तत्तत्कोशगतं तत्तन्नियामकं ब्रह्मचैतन्यमेवोच्यते।कुतः, "अन्नरसमयः" इत्यादौ "रसो वै सः" इत्यन्ते चैतेषां कोशव्यावृत्त्यर्थमेव रसशब्देन विशेषणादित्यर्थः । ननु यदि परिदृश्यमानदेह एव नान्नमयः, किन्तु ब्रह्मैव, कथं तर्हि "तस्येदमेव शिरः" इति प्रत्यक्षनिर्देशो युज्यते । न च वाच्यम् उपनिषद्द्रष्टा मुनिर्ब्रह्मापरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथा सति तेनापरोक्षीकृतप्राणमयादौ तत्प्रसङ्गात्, निर्देशवैयर्थ्याच्चेत्यत आह—इदमिति । दृश्यमानशिरःपक्षादावन्नमयभगवच्छिरःपक्षादेः सन्निहितत्वाद्ब्रह्मात्रमाद्वतजानुवत् 'इदं' इति च निर्देशो युज्यत-

अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः ॥

इति ब्रह्माण्डे । न चोक्तमात्मया विरिश्चादिरुच्यते—

## ॥ ओम् नेतरोनुपपत्तेः ओम् ॥

तत्त्वप्रकाशिका

इत्यर्थः । ननु तथाऽपि "तस्मा द्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः" इत्यन्योन्यमन्यतयोक्तान्नमयादीनां कथं ब्रह्मतेत्यत आह— अनन्योऽपीति । 'अन्यशब्देन प्रोच्यते' इत्यन्वयः । 'एको बहुरूपवान् भवति' इत्यनेन 'बहुरूपत्वान्नविरोधः' इत्येतदपि समापितं स्यात् ॥

नन्वेवं मयटां प्राचुर्यार्थत्वमुक्त्वा तथात्वे कथंचिदल्पार्थतां परिहृत्य भूताद्यत्वस्यार्थान्तरमभिधाय परामर्शस्यान्यपरत्वं समर्थ्य बहुभावस्य स्वरूपविषयत्वं गृहीत्वा पुच्छत्वोक्तेरविरोधमापाद्य 'इदं' इति निर्देशस्य लाक्षणिकत्वमङ्गीकृत्यापि किमन्नमयादीनां विष्णुत्वग्रहणेन, विरिश्चादय एवानन्दमयादयः सन्तु, तत्मापकसद्भावात् । न चोक्तहेतुभ्यस्तद्ग्रहणम् , ब्रह्मशब्दस्यापरब्रह्मस्वपि सम्भवात् । हेतुव्यपदेशस्य च विष्णुनिष्ठतया स्पष्टमप्रतिभानात् । मन्त्रवर्णार्थिकसमाख्यायाश्च सूर्यप्रोक्तत्वलिङ्गादिभ्यो दुर्बलत्वेन सावकाशत्वात् । अनन्यथासिद्धहेत्वन्तरस्य चाभावादित्यत आह—न चेति । तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य प्रतिज्ञांशस्य प्राचीनभाष्येणैव व्याख्यातत्वात्सौत्रमनन्यथासिद्धहेतुमेव व्याचष्टे—नेतर इति । नानन्दमया-

नह्यन्यज्ञानान्मोक्ष उपपद्यते । "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते" इति ह्युक्तम् ।

॥ ओम् भेदव्यपदेशाच्च ओम् ॥

"ते ये शतं प्रजापतेरानन्दाः" "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भ-

तत्वप्रकाशिका

दिर्विष्णोरितरः, "ब्रह्मविदाप्नोति परं" इत्यादावानन्दमयादिज्ञानेन मोक्षश्रवणात् । न चान्यज्ञानान्मोक्ष उपपद्यत इत्यर्थः । विष्णुज्ञानादेव मोक्षो नान्यज्ञानादिति कुत इत्यत आह— तमेवमिति ॥

हेत्वन्तरेण ब्रह्मादीनामानन्दमयत्वं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे—भेदेति । 'नेतरः' इत्यनुषज्यते । "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः" इति रुद्राच्छतगुणमात्रानन्दत्वोक्तेर्न तावदानन्दमयो विरिञ्चः,

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।

आनन्दं ब्रह्मणो विद्वान् ।

इत्यानन्दमयस्यापरिमितानन्दत्वोक्तेः । अत एव न रुद्रः, तस्य हिरण्यगर्भाच्छतांशोनानन्दत्वोक्तेः । एवं नेन्द्रबृहस्पत्यादयोऽपि । अदृश्ये स्वामिरहिते जैवगुणविधुरे वा साकल्येन निर्वचनागोचरे अपराश्रये तस्मिन्नानन्दमये योऽभयतया ध्यानरूपां प्रतिष्ठा विन्दते, अनन्तरं स उपासकोऽभयं भ-

वति" "स यश्चायं पुरुषे" इत्यादिभेदव्यपदेशात् । न च "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिश्रुतिविरोधः, "नामानि सर्वाणि यमाविशन्ति" इति तत्तच्छब्दवाच्यत्वोक्तेः ।

इदं हि विश्वं भगवानिवेतरो
यतो जगत्स्थाननिरोधसम्भवः ।

"असर्वस्सर्वः" इत्यपि । "विद्याऽऽत्मनि भिदाबोधः"

---

तत्त्वप्रकाशिका

गवन्तं गतो भवतीति श्रुतौ प्रकृत्याद्ययोग्यस्वातन्त्र्यादिश्रवणान्न प्रकृत्यादीनामानन्दमयत्वम् । "स यश्चायं" इत्यानन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथनान्नानन्दमयो ब्रह्मादिजीवसमूह इत्याशयः । नन्वस्त्वानन्दमयः परं ब्रह्म । तथाऽपि कथं तेन ब्रह्मादीनां भेदस्सम्भवति, तद्भेदस्य "तत्त्वमसि" इत्यादिश्रुतिविरोधादित्यत आह—न चेति । भवेदेतद्यद्येतच्छ्रुतीनामद्वैतार्थता स्यात् । न चैवम्, "नामानि सर्वाणि" इति श्रुत्या तत्त्वमस्यादिशब्दैः विष्णोरेव वाच्यत्वोक्तेरित्यर्थः । सन्तु वैताः श्रुतयोऽद्वैतपरास्तथाऽपि नोक्तभेदस्य तद्विरोधः, भगवतस्सकलस्वामित्वेनैक्यव्यपदेशोपपत्तेरित्येतत्प्रमाणेनाह—इदमिति । इदं विश्वं भगवानिवोच्यते स्वयमितरोऽपि सन् । यतः कारणात् जगत्स्थाननिरोधोत्पत्तिर्वर्तत इत्यर्थः । एतदेवाह "असर्वः" इति वाक्यं च । ननु भेदज्ञानस्य मिथ्याज्ञानत्वात्कथं तदनुसारेणैक्यश्रुतयो योज्यन्त इत्यत आह—विद्येति । न च

भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा ।
"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"
"असर्वस्सर्वे इवात्मैव सन्ननात्मेव प्रसङ्ग् पराङ् इवैक ईयते बहुधेयते स पुरुषस्सर्वेश्वरः स ब्रह्म"
सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।

तत्त्वप्रकाशिका

भिदाया अबोध इति व्याख्येयम्, अज्ञानस्य विद्यात्वाभावात् । ननु भेदज्ञानस्यापुरुषार्थहेतुत्वात्कथं तस्य विद्यात्वमित्यत आह—भेददृष्ट्येति । वेदगर्भो जीवेश्वरभेदज्ञानेन परमेश्वरबहुमानेन चानन्दादिगुणपूर्णं ब्रह्म प्राप्त इति स्मृत्यर्थः । सर्वेभ्योऽन्यमीशं जीवादन्यं "तदेनत्सत्यं" इत्यादिश्रुत्या प्रागुक्तप्रकारेणास्य महिमानं च यदा पश्यति तदा मुक्तो भवतीति श्रुत्यर्थः । एवं स्वामित्वार्थतयाऽद्वैतश्रुतीर्व्याख्यायान्तर्यामित्वार्थतयाऽपि ताः श्रुतिस्मृतिभ्यां व्याचष्टे—असर्वे इति । असर्वात्मकोऽपि सर्वात्मकत्वेनान्तर्याम्यप्यनन्तर्यामित्वेन देहान्तर्गतोऽपि बहिर्मात्रवृत्तित्वेन ज्ञायते । तथैकएव बहुधा ज्ञायत इत्यर्थः । अनेनान्तर्यामित्वादसर्वस्य सर्वत्वोक्तिरिति सिध्यति । विशिष्टैक्यार्थतया च ताः स्मृत्या व्याख्याति—नैतदिति । 'एतत्' इत्यस्य विवरणं "पुरुषमेकं" । इति अत्र पुरुषैक्यं

इत्यादेश्च । उक्ता च प्राप्तिः । "ब्रह्मैव सन्" इत्यपि जीव एव ब्रह्मशब्द । उपपद्यते च विरोधे ।

तत्त्वप्रकाशिका

निराकृत्याद्वैतश्रुतिविरोधपरिहाराय तदर्थत्वेन "बहूना" इति विशिष्टैक्यमुच्यते । नन्वेवमद्वैतश्रुत्यभावे कथमद्वैत श्रुत्यादिना निषिध्यते, तस्याप्रत्यक्षत्वेन श्रुतिं विना प्राप्त्यभावात्, अप्राप्तस्य च निषेधायोगादित्यत आह—उक्ता चेति । "न च तत्त्वमस्यहं ब्रह्मास्मीत्यादिश्रुतिविरोध" इति भाष्येऽद्वैतनिषेधाय श्रुत्यर्थापरिज्ञाननिमित्तप्राप्तेरुक्तत्वाद्युज्यते तन्निषेध इत्यर्थ । नन्वेतच्छ्रुतीनामविरोधकत्वेऽपि "ब्रह्मैव सन् ब्रह्माप्येति" इतिश्रुतिविरोधस्तु भविष्यति, अत्र 'ब्रह्मैव' इत्यब्रह्मतानिषेधेन तदधीनत्वादिनाऽतद्भूते तद्व्यपदेश इत्युक्तगतेरसम्भवादित्यत आह—ब्रह्मैवेति । नात्र परब्रह्मत्वाभिप्रायोऽयमाद्यो ब्रह्मशब्द, किन्तु "ब्रह्माणि जीवास्सर्वेऽपि" इति श्रुतेर्जीवपर एव । तथा च जीवभावमविहायैव ब्रह्माप्नोतीत्यर्थोपपत्तेर्नोक्तभेदस्यैतच्छ्रुतिविरोध इत्यर्थ । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वान्न जीवेऽसावुपपद्यत इत्यत आह—उपपद्यते चेति । परब्रह्मणि मुख्योऽपि ब्रह्मशब्दो जीवेऽप्युपपद्यते, जीवस्य परब्रह्मत्वार्थतास्वीकारे "ब्रह्माप्येति" इतिश्रुतब्रह्मप्राप्तिविरोधात्, प्रमाणान्तरविरोधाच्चेत्यर्थ । ननु विस्मृतकण्ठमणिरपि स्मृतकण्ठमणिरित्येवोच्यते, न तु प्राप्तमणिरिति, "परमं साम्यमुपैति" इत्यादावप्राप्तभोगा-

प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते ।

मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ।

इति हि भागवते । न च तत्तदनुमानविरोधः—

## ॥ ओम् कामाच्च नानुमानापेक्षा ओम् ॥

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्त्वे पृथगनुमानमपेक्ष्यते ।

तत्त्वप्रकाशिका

देरपि प्राप्त्युक्तेः । ननु संसारिणोऽपि "विमुक्तश्च विमुच्यते" इति विमुक्तत्वश्रवणात्तदन्यथानुपपत्त्या तस्य परब्रह्मत्वसिद्धेस्तद्विरोधो भेदाभिधानस्येत्यत आह—प्रमादेति । जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते, तद्गतबन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वात् अस्वाभाविके चाविद्यमानप्रयोगदर्शनादिति भावः । बन्धस्यास्वाभाविकत्वं कुत इत्यत आह—मुक्तिरिति ॥

ननु भेदोक्तेः श्रुत्यविरोधेऽपि विमतानि शरीराणि मद्भोगायतनानि शरीरत्वादित्याद्यनुमानविरोधस्तु भविष्यतीत्यत आह—न चेति । तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे—कामाच्चेति । किमद्वैतं श्रुत्याद्यनुकूलेनानुमानेन साध्यते, पृथगनुमानेन वा । नाद्यः, अद्वैतश्रुत्यादेरभावस्योक्तत्वात् । न द्वितीयः, पृथगनुमानस्य कामगामित्वेनादृष्टार्थविषयेऽनपेक्षिततयोक्तबाधकत्वायोगादिति भावः ।

उक्तं च स्कान्दे—

यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः ।
पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित् ॥

इति । "नैषा तर्केण मतिरापनेया" इति च ।

## ॥ ओम् अस्मिन्नस्य च तद्योगं शास्ति ओम् ॥

'अस्य' जीवस्य । युक्तिसमुच्चये चशब्दः ।

तत्त्वप्रकाशिका

अत्रैव स्मृत्यादिसम्मतिमाह—उक्तं चेति । 'श्रुतेरनपगा' तदनुकूला । 'एषा' परब्रह्मविषया मतिस्तर्केणाऽनेयाऽऽपाद्याऽपनेया निराकार्या च न भवतीत्यर्थः ॥

नन्वस्त्वेवमानन्दमयेन परब्रह्मणा हिरण्यगर्भादिजीवानां भेदः । सोऽपि सांसारिको न पारमार्थिकः, अभिहितवाक्यानां सांसारिकभेदपरत्वेनोपपत्तेरित्याशङ्कां परिहर्तुं सूत्रं पठति—अस्मिन्निति । 'अस्य' इति नानन्दमयपरामर्शोऽपि तु 'नेतरः' इत्युक्तजीवस्यैवेत्याह—अस्येति । अस्यान्यस्य चेत्यन्यथाप्रतीतिनिरासायाह–युक्तीति । न केवलं भेदव्यपदेशादानन्दमयेन जीवानां भेदः, किं नाम 'अस्मिन्' प्रकरणे 'अस्य' जीवस्य आनन्दमयेन सह मुक्तावपि सम्बन्धमेव श्रुतिश्शास्ति । ततश्च तयोर्भेद एव नत्वैक्यम् । नापि सांसारिक एव भेदः, सम्बन्धस्य भेदसापेक्षत्वादित्यर्थः ।

" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता " " अनिलयने अभयं प्रतिष्ठां विन्दते " " एतमानन्दमयमात्मानमुपसङ्क्रामति " इत्यादि ॥

तत्त्वप्रकाशिका

किं तद्योगशासनमित्यत आह—सोऽश्नुत इति । 'इत्यादि' इत्यस्य 'शास्ति' इति सूत्रपदेनान्वयः । अथवा हेत्वन्तरेण देहादीनामन्नमयादित्वनिरासकमेतत्सूत्रम् । तदुक्तम्—

योगमन्नमयादीनां तत्फलत्वेनास्य शंसति ।
स्यानद्वयेऽप्यतः कोशा एत इत्यति साहसम् ॥

इति । तस्मात्सकलजीवादिभिन्नं परब्रह्मैवान्नमयादिपञ्चरूपमिति युक्ता तज्जिज्ञासेति सिद्धम् ॥

चन्द्रिका

## ॥ ओम् आनन्दमयोऽभ्यासात् ओम् ॥

वैदिकाश्शब्दास्तावच्चतुर्विधाः, अन्यत्रैवप्रसिद्धा उभयत्रप्रसिद्धा अन्यत्रप्रसिद्धास्तत्रप्रसिद्धा इति । नन्वन्यत्रैवप्रसिद्धवत्तत्रैवप्रसिद्धा-

प्रकाश.

**ओम् आनन्दमयोऽभ्यासात् ओम्** । एतदध्यायसाफल्योक्तिपरा "अथ ब्रह्मस्वरूपनिरूपणे" इत्यादिटीका "समन्वयसूत्रप्रतिज्ञातसमन्वयहेतौ" इत्यादिनाऽग्रे विवरिष्यन्, तर्ह्यध्यायस्य समन्वयरूपैकार्थत्वात् पादभेदः किं निबन्धन इत्यतः, समन्वयेऽप्यवान्तरभेदेनेति भावेन पादोपाधीन् वक्तुं प्रवृत्ता, "शब्दास्तावच्चतुर्विधाः" इत्यादिटीका प्रतीतानुपपत्तिनिरासेन समर्थयिष्यमाणोऽनुवदति— **वैदिका इति** । वेदगता इत्यर्थः । "वैदिकाश्शब्दाः" इति सुधोक्त्या टीकास्थशब्दपदस्य वैदिकशब्दपरत्वमुक्तं भवति । लोकवेदाधिकरणन्यायेन वैदिकानामेव लौकिकत्वान्न ततो भेदः, भाषाशब्दा एवात्र व्यावर्त्यन्तइति भावः । समन्वयस्तु त्रिविधानामेवेति तावच्छब्दः । टीकारीत्या व्युत्क्रमेण निर्देशः । "नन्विन्द्रादिशब्दानामन्यत्रैवप्रसिद्धाना विष्णौ समन्वयस्य प्रथमपादएव सिद्धत्वाद्व्यर्थ एवायं पादः प्रतिभाति । न च तेषामन्यत्रैवप्रसिद्धताऽभावः, तथासति तृतीयवैयर्थ्यात्, अन्यत्रैवान्यत्रापीत्यतः प्रकारान्तराभावात्" इति चतुर्थपादीयशङ्काटीका विवरीतुं चातुर्विध्यमाक्षिपति—**नन्विति** । "ब्रह्मण्येव" इतिसुधानुरोधात् टीका-

चन्द्रिका

अपि पृथग्वाच्याः। न च 'तत्र' इत्यनेन तत्रैवेति विवक्षितम्। अन्यथा तत्रापीति विवक्षाऽऽपत्त्या उभयत्रप्रसिद्धेष्वन्तर्भावः स्यात्। अत एव तत्रप्रसिद्धास्सुधायां "ब्रह्मण्येव प्रसिद्धाः" इति निर्दिष्टा इति वाच्यम्, तथात्वे अन्यत्रैवप्रसिद्धानां पार्थक्यायोगात्। ननु लोकतोऽन्यत्रैव प्रसिद्धाः अन्यत्रप्रसिद्धाः, श्रुत्यादिभिरन्यत्रैव प्रसिद्धास्त्वन्यत्रैवप्रसिद्धा इति भेदः। अत एव—"श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानां" इति चतुर्थपादे भाष्यम्, अत्र च सत्यधिकरणे "लोकतोऽन्यत्र प्रसिद्धानां" इति टीका च। तत्र प्रसिद्धानां तत्रैव प्रसिद्धानां वा अव्युत्पाद्यसमन्वयत्वेन अभेदविवक्षेति चेत्, न, अन्यत्र प्रसिद्धत्वेनाभिमतस्य आनन्दमयादिनाम्नोऽन्यस्मिन्नर्थविशेषे सर्वगतत्वान्त-

प्रकाश

स्थतत्रेत्यस्य तत्रैवेत्यर्थ इति शङ्काव्याजेनोपपत्तिं वदन्नाह—न च तत्रेति। तथात्वइति। 'तत्र' 'तत्रैव' इत्यनयोरभेदे अन्यत्र प्रसिद्धानामन्यत्रैवप्रसिद्धानां च भेदो न स्यात्। अन्यथाऽन्यत्रापीति विवक्षापत्त्योभयत्रप्रसिद्धेष्वन्तर्भावस्स्यादित्यर्थः। चतुर्थपादीयपरिहारटीकोक्तसमाधिविशेषविवक्षया समर्थयिष्यमाणो यथाश्रुतमाशङ्क्य निषेधति—नन्विति। इन्द्राकाशादिशब्दानामिन्द्रादिष्वेव लोकतोऽवगतेरव्यक्तादिशब्दानामवरत्वादिलिङ्गादिनाऽन्यगतत्वस्यैव प्रतीतेश्चेति भावः। सर्वगतत्वेति। द्वितीयपादीयस्येत्यर्थः।

चन्द्रिका

र्यामित्वादिलिङ्गात्मकशब्दजातस्याप्यन्यत्रादित्यादाविन्द्राकाशादिशब्दानामिन्द्रादाविव लोकतोऽप्रसिद्ध्याऽन्यत्रप्रसिद्धत्वाभावापातात्। प्रत्युताऽऽदित्यादिश्रुत्यादिना सर्वगतत्वादेरन्यत्र प्रसिद्धेर्वक्ष्यमाणत्वेनावरत्वादिलिङ्गेनान्यत्रैवप्रसिद्धाव्यक्तादिशब्दानामिवान्यत्रैव प्रसिद्धता स्यात्। यथा च सर्वगतत्वादेरन्यत्रप्रसिद्धिसाधकादित्यश्रुतिरन्तर्यामित्वादेरन्यत्रप्रसिद्धिसाधकशरीरित्वादिलिङ्गं च लोकतोऽन्यत्र प्रसिद्धम्, तथाऽव्यक्तादिशब्दस्यान्यत्रप्रसिद्धिसाधकमवरत्वादिलिङ्गमपि लोकतोऽन्यत्र प्रसिद्धमेव। किञ्चान्यत्रैवप्रसिद्धाव्यक्तप्रकृत्यादिशब्देष्वपि लोकतोऽन्यत्र प्रसिद्धेरसत्त्वादन्यत्र

प्रकाशः

इन्द्रेति। अन्तराद्यधिकरणोदाहरणानामित्यर्थः। अन्यत्रप्रसिद्धत्वाभावेति। तथा चान्यत्रप्रसिद्धलक्षणं तत्राव्याप्तमिति भावः। अन्यत्रैवप्रसिद्धानां लक्षणमतिव्याप्तमित्याह—प्रत्युतेति। आदिपदेनादितिश्रुत्यादिनाऽत्तृत्वादेरिति गृह्यते। ननु लिङ्गपादे अन्यत्रैवप्रसिद्धिसम्पादकश्रुत्यादेर्लोकतोऽन्यत्रप्रसिद्धत्वं विवक्षितम्। अत एव टीकायां "लोकतोऽन्यत्रप्रसिद्धादित्यश्रुतिसहपठितसर्वगतत्वलिङ्गस्य" इत्याद्युक्तमित्यत आह—यथा चेति। प्रकारान्तरेणोभयलक्षणस्याप्यतिव्याप्तिमाह—किञ्चेति। यद्वा-पूर्वमन्यत्रैव प्रसिद्धानां लक्षणं लिङ्गपादीयशब्देष्वतिव्याप्तमित्युक्तम्। इदानीमाद्यपादीयशब्दैः साङ्कर्यमाह—किञ्चेति।

चन्द्रिका

प्रसिद्धेन्द्राकाशादिशब्देषु च श्रुत्यादिनाऽप्यन्यत्र प्रसिद्धेः सत्त्वात्साङ्कर्यं स्यात् । न च प्रबलश्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धा अन्यत्रैवप्रसिद्धा, श्रुत्यादिमात्रेणान्यत्र प्रसिद्धास्त्वन्यत्रप्रसिद्धा इति भेद, अव्यक्तादिशब्दानामन्यत्रप्रसिद्धिसाधकावरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्रप्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसम्भवेन बलवत्त्वात् । तस्मान्नान्यत्र प्रसिद्धानामन्यत्रैवप्रसिद्धेभ्यो भेदः । किञ्चोभयत्रप्रसिद्धे द्युभ्वाद्यायतनत्वलिङ्गे ज्योतिरादिनाम्नि च न तावल्लोकत उभयत्र प्रसिद्धिः;

प्रकाश

श्रुत्यादिनेति । "अग्नेन्द्रमग्नि" इत्यग्निश्रुत्येन्द्रशब्दस्याग्नौ "सर्वाणि ह वा इमानि भूतानि" इत्युक्तभूतोपादानत्वलिङ्गेनाकाशशब्दस्याकाशे प्रसिद्धेः सम्भवादिति भाव । "पूर्वं क्वचिच्छ्रुत्यादिनैवान्यत्रप्रसिद्धसमन्वयोक्तावप्येतत्पादीयश्रुत्यादीना प्राबल्यात्" इति चतुर्थपादीयटीकोक्तमाशङ्क्य निरस्यति—न चेति । अव्यक्तेति । चतुर्थपादीयानामित्यर्थः । 'अव्यक्तात्' इति पञ्चम्युक्तोत्कर्षावधित्वाक्षिप्तावरत्वस्योत्तमे विष्णावयोगादिति भावः । गुहेति । "गुहा प्रविष्टौ परमे परार्धे" इत्यादिवाक्योक्तस्य द्वितीयपादीयस्येत्यर्थः । मूत्रोपात्तलिङ्गाभिप्रायेणेयमुक्ति', ऋतपातृत्वस्यैव तत्र समन्वयात् । तृतीयपादोपाधिमपि निरसितुमाह—किञ्चेति । लोकतस्तथात्वं वा श्रुत्यादिभिर्वेति विकल्प्य क्रमेण प्रत्याह—न तावदित्यादिना ।

चन्द्रिका

प्रकृत्यादौ लोकतोऽप्राप्ते । नापि श्रुत्यादितः, तथैव टीकादौ वक्ष्यमाणत्वादिति युक्तम् । आनन्दमयेन्द्राव्यक्तादिशब्देष्वपि पूर्वोत्तरपक्षश्रुत्यादिनोभयत्र प्रसिद्धेर्वक्तुं शक्यत्वात् । तस्मादुभयत्र प्रसिद्धानामपि नान्यत्रप्रसिद्धादिभ्यो भेदः । किञ्चाऽऽकाशादिशब्दानां "आकाशस्तल्लिङ्गात्" इति प्रथमे, "आकाशोऽर्थान्तरत्वादिव्यपदेशात्" इति तृतीये, "कारणत्वेन चाकाशादिषु" इति चतुर्थे च पादे समन्वयोक्तेरन्यत्रोभयत्रान्यत्रैव च प्रसिद्धता स्यात् ।

प्रकाश.

न हि द्युम्वाद्यायतनपदेन प्रकृतिरुद्रादिर्विष्णुर्वा, "ज्योतिर्दर्शनात्" इत्यादौ वक्ष्यमाणज्योतिश्शब्देन च जीवो विष्णुर्वा लोकतः प्रतीयत इति भावः। पूर्वेति । पूर्वपक्षप्रापकश्रुतिलिङ्गादिनाऽन्यत्र प्रसिद्धिः, सिद्धान्तप्रापकश्रुत्यादिना च भगवतीति, सर्वेऽप्युभयत्रप्रसिद्धास्स्युरित्यर्थः । आनन्दमयेन्द्रादय आदिपदोक्तसर्वगतत्वादिलिङ्गवाचिनश्चाद्यद्वितीयपादीयाः, अव्यक्तज्योतिर्जीवपञ्चजनादयः चतुर्थपादीया इति ध्येयम् । सामान्यतः पादोपाधीन्निरस्य विशिष्य निराह—किञ्चेति । आदिपदेन "ज्योतिश्चरणाभिधानात्" इति प्रथमे, "ज्योतिर्दर्शनात्" इति तृतीये, "ज्योतिरुपक्रमात्" इति चतुर्थे च ज्योतिश्शब्दस्य समन्वयोक्तेः, तथा "अदृश्यत्वादिगुणकः" इति द्वितीये, "अक्षरमम्बरान्तधृतेः" इति तृतीये अक्षरपदस्य समन्वयोक्तेरिति ग्राह्यम्।

चन्द्रिका

किञ्च रूढत्वयौगिकत्वाभ्यां हि नामलिङ्गभेदः, सुधायां तथैवोक्तेः। "धर्मविशिष्टधर्मिवाचिनां" इति द्वितीयपादीयटीकायामपि यौगिकत्वं लिङ्गत्वमित्यभिमेतत्वाच्च । अत्रापि-टीकायां धर्मधर्मिवाचिपदाभ्यां ते एव विवक्षिते । अन्यथा धर्मिवाचिनामन्तर्याम्यादिशब्दानां नामता, धर्मवाचिनामानन्दादिशब्दानां लिङ्गता च स्यात् ।

प्रकाश

आद्यद्वितीयपादोपाधिविभागं च निराह——किञ्चेति । सुधायामिति । "साक्षाद्धर्मिवाचिनो नामात्मकाः, धर्मद्वारा धर्मिणि वर्तमाना लिङ्गात्मकाः" इत्येतदधिकरणे, तथा लिङ्गपादस्यादौ "नन्वतीतपादे समन्विता अपि लिङ्गात्मका एव, यौगिकत्वात्" इति च स्पष्टमुक्तेरित्यर्थः । अत्रापीति । "लिङ्गात्मकानां धर्मवाचित्वान्नामात्मकेभ्यो धर्मिवाचिभ्यः" इत्येतदधिकरणटीकायामपीत्यर्थः । ते इति । यौगिकत्वरूढत्वे इत्यर्थः । अन्तर्यामीति । द्वितीयपादस्थानामन्तर्याम्यत्तृगुहाप्रविष्टादिशब्दानां लिङ्गतया अभिमतत्वादिति भावः । आनन्देति । अत्र नये समन्वीयमानानां आनन्दविज्ञानादिशब्दानां नामत्वादिति भावः । एतेन टीकावाक्ययोर्विरोधोऽपि निरस्तो बोध्यः । एतेन "लिङ्गात्मकाश्च धर्मवचनाः व्यवधानेनान्यबुद्धिं जनयन्ति, नामात्मकास्तु सत्त्ववचनाः साक्षादेव" इत्युपासनापादीयसुधावाक्यमपि व्याख्यातं ध्येयम् ।

चन्द्रिका

स च भेदो न युक्त, सर्वेषामपि ब्रह्मणि महायोगाङ्गीकारात्। न चापातप्रतीत्या रूढता, अन्नमयादिषु तदसम्भवात्। न च योगरूढियुक्तानि नामानि, केवलयौगिकानि लिङ्गानीति भेद, सर्वेषां ब्रह्मणि विद्वद्रूढे। किञ्चान्यत्रप्रसिद्धाना नाम्ना लिङ्गाना चान्यत्र प्रसिद्धत्वाविशेषात्पादभेदो न स्यात्। अन्यथा तृतीये उभयत्रप्रसिद्धाना चतुर्थे चान्यत्रैवप्रसिद्धाना नाम्नां लिङ्गानाञ्च समन्वयोक्तिर्न स्यात्। तस्मान्न पादभेदो युक्त'।

प्रकाशः

ततः किमित्यत आह——स चेति। अत एव सुधायां लिङ्गपादे "नन्वतीतपादे समन्विता अपि लिङ्गात्मका एव, यौगिकत्वादन्यथा गुणपूर्त्यलाभेन समन्वयसमर्थनवैयर्थ्यात्" इत्यादिना तथैवोक्ते, "यच्छब्दा योगवृत्तयः" इत्यणुभाष्योक्तेश्चेति भावः। "तथाऽप्यन्यत्र प्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यदोषः" इति सुधोक्तं परिहारमग्रे परिष्कर्तुकामो यथाश्रुतमनूद्य प्रत्याह—न चेति। तदिति। योगार्थस्यैव तत्र प्रतीतिरिति भाव'। सर्वेषामिति। "सा योगादेव लभ्यते" इत्युक्तेः। तथाच केवलयौगिकान्यसम्भावितानीति भावः। अभ्युपेत्यापि नामलिङ्गभेदं पादभेदं निराह—किञ्चेति। ननु "समन्वयेऽप्यवान्तरभेदेन पादभेदः" इति टीकोक्तदिशा भेद स्यादित्यत आह—अन्यथेति। एतेन टीकोक्तमप्याक्षिप्तं बोध्यम्।

प्रकाशः

"यावान्वा अयमाकाशः" इत्युत्तरवाक्ये ब्रह्मपरता, यथा वा "अक्षरात्परतः परः" इत्यत्राक्षरशब्दस्यान्यपरत्वेऽपि "अक्षरात्सम्भवतीह विश्वम्" इत्यत्र ब्रह्मपरता, तद्वदिति द्रष्टव्यम् । एतच्च—

तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोद्यते ।

इत्यनुव्याख्यानेन तुल्यन्यायतया सूचितम् । "बाधकबलात्" इत्युक्त्यैव "नह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते" इति तार्तीयिकगीताभाष्यविरोधोऽप्यपोढः । ननु "अव्यक्तात्पुरुषः परः" इत्यादावपरत्वादिबाधके सत्यपि तदधीनत्वन्यायेनान्यगतापरत्वं प्रति स्वातन्त्र्येण निमित्तेन 'अव्यक्तात्' इत्यादिपञ्चम्यन्तादिपदवाच्यत्वं विष्णोर्वक्ष्यते, तथेहाप्यन्यगतनियम्यत्वं प्रति स्वातन्त्र्येण "इन्द्रस्य" इत्यादिषष्ठ्यन्तपदवाच्यत्वं युक्तम् । एवं न न मुख्यार्थत्यागः, एकप्रकरणस्थस्यार्थान्तरपरत्वदोषोऽपि नेति चेन्न, 'अव्यक्तात्' इत्यस्याब्रह्मत्वे "अनाद्यनन्तं महतः परं ध्रुवं" इत्युत्तरवाक्यस्याप्यब्रह्मपरत्वं स्यात्, महत्परत्वलिङ्गात् । तच्चानिष्टं, मुक्तिहेतुत्वश्रवणात्तन्नेति कथं चिद्बाधकनिरासेन 'अव्यक्तात्' इत्यस्य ब्रह्मपरत्वमुपेतम् । न चेह "इन्द्रस्य" इत्यादेरब्रह्मपरत्वे बाधकमस्ति । इन्द्रादिपदप्रवृत्तिनिमित्तरूपगुणलाभस्य "इन्द्रो राजा" इत्यादिवाक्यगतेन्द्रादिपदसमन्वयेनैव सिद्धेः । "इन्द्रो राजा" इत्यादिवाक्यस्थेन्द्रादिशब्दसमन्वय-

चन्द्रिका

अन्ये तु—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "यएषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यक्ष्यादित्ययोरन्तस्स्थ प्रतीयते । स विद्याकर्मातिशयलब्धैश्वर्य कश्चित्संसारी, न तु परमात्मा, "हिरण्यश्मश्रु" इत्यादौ रूपादिश्रवणात्, परमात्मनश्चारूपत्वेन श्रुतत्वादिति प्राप्ते, परमात्मैवेति सिद्धान्तः,

प्रकाश

मात्रेणैव अदृश्यत्वमुखकृतपूर्वाक्षेपसमाधानसिद्धेश्च । न चैवं "अनेन जीवेनात्मना" इत्यादिवाक्यस्थजीवशब्दसमन्वयेनैव तच्छब्दप्रवृत्तिनिमित्तगुणलाभात् "जीवा एव तु दुःखिनः" इत्यादिवाक्यस्थजीवादिशब्दसमन्वयो न स्यादिति वाच्यम्, "स बद्धः स दुःखी स बद्धयति स दुःखयति" इति विशेषवचनात् । इह तथा नियामकाभावादिति । यद्वा—सर्ववेदगतसर्वशब्दवाच्यत्वसिद्ध्यै तत्रापि विष्ण्वङ्गीकारेऽप्यदोषः । अतएव 'अन्यपरता' इत्युक्तं, न तु 'अन्यमात्रपरता' इति ।

एवं स्वमतेऽधिकरणशरीरं सूत्रार्थं च समर्थ्य परमतं प्रत्याख्यातुमनुवदति—अन्ये त्विति । छान्दोग्ये आद्येऽध्याये श्रूयते "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम सएष सर्वेभ्यः पाप्मभ्य उदित. उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद इत्यधिदैवतमथाध्यात्मं य एषोऽन्त

चन्द्रिका

आदित्यवाक्ये "सर्वेभ्यः पाप्मभ्य उदितः" इति श्रुतस्य सर्वपापराहित्यस्य, अक्षिवाक्ये "सैवर्क् तत्साम" इत्यादौ श्रुतस्य सार्वात्म्यस्य च संसारिण्यसम्भवात्।

प्रकाशः

रक्षिणि पुरुषो दृश्यते" इत्यादि। अत्र किं मादित्यमण्डलादिस्थो हिरण्मयः पुरुषो विद्याकर्मवशात्प्राप्तैश्वर्यः कश्चित्संसारी उत परमात्मेति संशये, 'हिरण्यश्मश्रुः' इत्यादिरूपस्य, "य एषोऽन्तरादित्ये" इत्याद्याधारस्य, "ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे" इति सावधिकैश्वर्यमर्यादायाश्च श्रवणात्तेषां च "अरूपमस्पर्शं" इति श्रुत्या अरूपे, "स्वे महिम्नि" इतिश्रुत्याऽऽधाररहिते, "एष सर्वेश्वरः" इतिश्रुत्या निरवधिकैश्वर्ये परमात्मन्यसम्भवात्। यथोक्तं भामत्यां—

मर्यादाधाररूपाणि संसारिणि परे तु न।
तस्मादुपास्यः संसारी कर्मानधिकृतो रविः॥

इति। एवं प्राप्ते, आदित्यवाक्ये "सर्वेभ्यः पाप्मभ्यः" इति सर्वपापराहित्यस्य, अक्षिवाक्ये "सैव ऋक् तत्साम" इत्यादौ सार्वात्म्यस्य परमात्मधर्मस्योपदेशात्तयोश्च "अपहतपाप्मा" इत्यादिश्रुत्या नित्यशुद्धे सर्वोपादानतया सर्वाभिन्ने परमात्मनीवान्यत्रायोगात्, "य आदित्ये तिष्ठन्न आदित्यादन्तरो यमादित्यो न वेद" इति आदित्यदेवतायाः परमेश्वराद्भेदोपदेशाच्च संसारिणोऽन्यः परमात्मैवान्तस्स्थइति सिद्धान्त इत्यर्थः।

चन्द्रिका

रूपादिकन्तु नीरूपेऽपि सविशेपब्रह्मणि साधकानुग्रहार्थमैच्छिकमुपास्यं मायामयमस्ति। यद्वा—सर्वस्य कार्यजातस्य ब्रह्मोपादानकत्वादुपादेयस्य चोपादानादनन्यत्वात्, कार्यशरीरगतरूपादिभिर्ब्रह्म व्यपदिश्यते। मुमुक्षु प्रति सविशेपनिरूपण च मोक्षसाधनानिर्विशेपब्रह्मज्ञानार्थम्। यथोक्तम्—

निर्विशेप पर ब्रह्म साक्षात्कर्तुमनीश्वरा।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेपनिरूपणैः॥

इत्यादीत्याहु।

केचित्तु इदमेव वाक्यमुदाहृत्यैवमेव च पूर्वपक्षयित्वा "तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी" इति श्रुतपुण्डरीकाक्षत्व

प्रकाश

ननु तर्हि रूपादिकमनुपपन्नमित्यतस्तदुक्त द्वेधा परिहारमनुवदति—रूपादिकं त्विति। साधकेति। साधनानुष्ठातार 'साधका' इत्यर्थ। नन्वेवं मुमुक्षु प्रति सविशेपनिरूपणमनर्थकमित्यत आह—मुमुक्षुमिति।

दूपणसौकर्याय रामानुजमतमपि पूर्वपक्षसाम्यादत्रैवानुवदति—केचित्विति। "हिरण्यश्मश्रु" इत्यादिशरीरित्वश्रवणाज्जीव एवान्तरस्थस्तस्यैव स्वकर्मफलभोगाय शरीरयोगोपपत्तेरिति प्राप्ते, सर्वपापराहित्यपुण्डरीकाक्षत्वादिलिङ्गात्परमात्मा, "हिरण्यश्मश्रु" इत्यादिना उक्तस्य "आदित्यवर्णं तमस परस्तात्" इत्यादिश्रुतेरप्राकृतशरीरस्य परमपुरुषे सम्भवात्, "य आदित्ये तिष्ठन्य आत्मनि तिष्ठन्" इति

चन्द्रिका

सिद्धान्तयुक्तिमाहु । तदुभयमपि न, अस्मद्रीत्या आनन्दमयाधिकरणाक्षेपाय अदृश्यत्वादिगुणयुक्तस्य स्वप्रकरणस्थभेदव्यपदेशवतश्च वाक्यस्योदाहरणत्वसम्भवे तद्रहितस्य तदयोगात् । उक्तं हि त्वयैव''—''य आदित्यमन्तरो यमयति'' इति श्रुत्यन्तरे भेदव्यपदेशात्'' इति । किञ्च—

नीरूपेऽपि च रूपादि यद्युपास्त्यर्थमुच्यते ।
जीवेऽपि पाप्माभावादि तर्ह्युपास्त्यर्थमुच्यताम् ॥

प्रकाश

भेदव्यपदेशाच्चेत्याहुरित्यर्थ । उदाहरणानौचित्येन मतद्वयमपि निरस्यति—**तदुभयमपि नेति** । 'आक्षेपाय' तदाक्षेपेण पूर्वपक्षोत्थानाय । 'तद्रहितस्य' पूर्वाक्षेपकलिङ्गरहितस्य भेदव्यपदेशरहितस्य च उदाहारणत्वायोगादित्यर्थ । स्वप्रकरणे स्वभेदव्यपदेशो नेत्येतदुभयसम्मतमित्याह—**उक्तमिति** । 'त्वया' इति वादिद्वयं प्रत्युच्यते ; तथा च श्रुत्यधिकरणसङ्गत्योरभावादयुक्तोऽयं विचार इति भाव । एवं साधारण्येन मतद्वयं निरस्य, प्रातिस्विकरूपेणाप्यद्वैतिमतं निरसितु, तन्मते सिद्धान्ते रूपादेर्या द्वेधागतिरुक्ता, तत्राद्ये तावद्दोषमाह—**किं चेति** । उच्यतामिति । अविद्यमानारोपस्योभयत्र तुल्यत्वात् । तथा च सिद्धान्तानुत्थितिरिति भाव । ''रोगाख्याया ण्वुल् बहुलम्'' इति बहुलग्रहणाद्वा, ''क्तिन्नाबादिभ्य'' * इति क्तिन्नन्ततेन वा 'उपास्ति' इति साधु । वैषम्यमा-

* ''स्त्रिया क्तिन्'' इतिसूत्रकाशिकाया इदमुपलभ्यते । तद्व्याख्यापदमञ्जर्यां आस्तिशब्दोऽपि समर्थित ।

चन्द्रिका

ननु जीवे पाप्मनो व्यावहारिकत्वात्तद्राहित्यं प्रातिभासिकम्, ब्रह्मणि तु नीरूपत्वस्य तात्त्विकत्वात् रूपं व्यावहारिकम्। न च व्यावहारिकविषयत्वेन प्रामाण्यसम्भवे श्रुतेः प्रातिभासिकविषयत्वं युक्तमिति चेन्न, त्वन्मते उपास्यस्य नामादौ ब्रह्मत्वादेः प्रातिभासिकत्वनियमेनात्रापि तथैव युक्तत्वात्। त्वन्मते चोपासनावाक्यस्य तत्कर्तव्यतामात्रपरत्वेन अर्थपरत्वाभावात्। कर्तव्यतायां च व्यावहारिकप्रातिभासिकविभागाभावात्। श्रुतौ श्रद्धालुना श्रुत्योर्विषयभेदेन तात्त्विकविषयत्वस्यैव वक्तव्यत्वाच्च। न च हिरण्यश्मश्रुत्वादिकमन्यतः प्राप्तं, येन तद्वाक्यमनुवादकं सत् तत्रातात्पर्यादप्रमाणं न स्यात्। किञ्च—जीवे पाप्मादेर्व्यावहारिकत्वेऽपि तद्राहित्यश्रुतिस्त्वंपदलक्ष्यशुद्धरूपाभिप्राया पारमार्थिकविषयैवास्तु। न च शुद्धं रूपं ब्रह्मैवेति ब्रह्मविषयत्वमेवेति

प्रकाश

शङ्क्य निरस्यति—**नन्विति**। ततश्च किमित्यत आह—**न चेति**। **नामादाविति**। "नाम ब्रह्मेत्युपासीत" इत्युक्तनामादावित्यर्थः। यदपि व्यावहारिकपरत्वलाभायेत्थमुक्तिरिति, तदयुक्तं वैषम्यकथनमित्याह—**त्वन्मते चेति**। 'श्रुत्योः' नीरूपत्वसरूपत्वश्रुत्योः, 'विषयभेदेन' प्राकृताप्राकृतादिविषयभेदेनेत्यर्थः। न तु व्यावहारिकरूपविषयत्वेनाप्रामाण्यमित्यर्थः। ननु मिथ्यारूपविषयत्वेऽपि नाप्रामाण्यं, तत्र तात्पर्याभावादित्यत आह—**न चेति**।

चन्द्रिका

वाच्यं, त्वया अस्य वाक्यस्य सविशेषगशुद्धब्रह्मविषयत्वाङ्गीकारात् । यच्च—उपादानं ब्रह्म कार्यकारणयोरभेदात् कार्यगतधर्मैर्व्यपदिश्यत इत्युक्तम्, तन्न, स्वर्णे कटकत्वादेरिव कटकादावपि स्वर्णत्वस्य व्यवहारेण ब्रह्मधर्मैः कार्य एव व्यपदेशापातात्। न चैतदधिकरणप्रतिपाद्यं सविशेषं ब्रह्म शरीरादिभ्रमाधिष्ठानम्, येनाधिष्ठान एव आरोप्यधर्मव्यवहारः, नतु विपरीतमिति शङ्क्यं,चेत्। कथं च अधिष्ठाने ब्रह्मणि पापराहित्याद्यसाधारणरूपेण भासमाने तत्राध्यस्तगतधर्मव्यवहारः । किञ्चैवं ब्रह्मणो विरुद्धधर्माधिकरणनानाकार्योपादानतया ब्रह्मविषयकवाक्यविरोधः काप्यपरिहार्यः स्यात्।

प्रकाशः

रूपादेराद्यां गत्युक्तिं निरस्य द्वितीयामनूद्य निरस्यति—यच्चेति । ब्रह्मधर्मैरिति । तथा च पापराहित्यादिब्रह्मधर्माणां ब्रह्मकार्ये जीवेऽपि सम्भवेनास्मिन्नपि परिहारे सिद्धान्तानुन्मेषइति भावः । ननु ।

समारोप्यस्य धर्मेण विषयो रूपवान्भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥

इत्यद्वैतिभिरङ्गीकारेण अधिष्ठान एवारोप्यधर्मव्यपदेश इति कथमेवमापादनमित्यत आह—न चेति । 'ब्रह्म' इत्यन्तमनुवादः । अत्र प्रतिपाद्यस्याधिष्ठानत्वमेव नेत्युक्तं अङ्गीकृत्याप्याह—कथं चेति । 'भासमाने' अत्र वाक्ये प्रतीयमाने । किं चैवं सति मीमांसामात्रोच्छेद इत्याह—किं चैवमिति । एवं सि-

चन्द्रिका

यच्चोक्तम्—सविशेषनिरूपणं मोक्षसाधननिर्विशेषज्ञानार्थमिति, तन्न, "उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति श्रुतसर्वपापनिवृत्तिरूपमुक्तिफलहानस्य अश्रुतफलान्तरकल्पनस्य चायोगात् । किञ्च—किं सविशेषज्ञानं निर्विशेषज्ञानार्थम्, किं वा तस्य ज्ञानविजातीयवृत्त्यन्तररूपमारोपितविषयमुपासनापरपर्यायं ध्यानम् । नाद्यः, निर्विशेषशब्देन विशेषाभावविशिष्टस्योक्तौ त्वन्मते विशिष्टज्ञानस्य मोक्षाहेतुत्वात्, तदभावेनोपलक्षितस्योक्तौ च काकेन गृहे संस्थानविशेषस्येव विशेषाभावेन विशेष्यस्यैवोपलक्ष्यत्वे,

प्रकाशः

द्वान्ते रूपाद्युक्तेः द्वेधाऽपि गतिकथनं निरस्य, इदानीं, यदपि सविशेषनिरूपणस्य फलमुक्तं, तदपि श्रुतहानाश्रुतकल्पनादोषाभ्यां निरस्यति—यच्चोक्तमिति । 'अस्तु वा सविशेषनिरूपणं निर्विशेषज्ञानार्थमिति, तथाऽपि सविशेषज्ञानं वा तदर्थमुत सविशेषध्यानं वेति ध्यानस्वरूपं निरूपयन्नेव विकल्प्य निरस्यति—किं चेति । 'तस्य' सविशेषस्य । निर्विशेषशब्देन विशेषाभावविशिष्टमुच्यते तदुपलक्षितं वेति विकल्पौ हृदि कृत्वा, क्रमेण निरस्यति—निर्विशेषेति । उपलक्षणपक्षेऽपि विशेषाभावोपलक्ष्यं विशेष्यमात्रं वा ब्रह्मगतः कश्चिद्धर्मो वेति विकल्पौ हृदि कृत्वाऽऽह—तदभावेनोपलक्षितस्योक्तौ चेति । 'विशिष्टग्राहिणा' सविशेषग्राहिणा । विशिष्टग्राहिणा स्वरूपस्य ग्रहणेऽपि उप-

चन्द्रिका

तस्य विशिष्टग्राहिणा ज्ञानेन प्रागेव ज्ञातत्वात्, अन्यस्योपलक्ष्यस्याभावात् । उपलक्ष्यत्वाकारेण च ज्ञानस्य त्वन्मते मोक्षासाधनत्वात् । न च विशेषणाविषयं विशेष्यज्ञानं प्रागसिद्धमिति वाच्यम्, विशिष्टज्ञानस्य विशेषणज्ञानाभावार्थत्वायोगात् । तथा च—

विशिष्टब्रह्मधीसाध्या शुद्धधीरित्यसङ्गतम् ।
विशिष्टप्रत्यये यस्माद्विशेष्यं भासतेतराम् ॥

किञ्च—सविशेषज्ञानं निर्विशेषज्ञानस्य न तावत् दृष्टद्वारा हेतुः, तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेन, चित्तवशीकरणेन वा तदभावविशिष्टज्ञानस्य, तदभावोपलक्षितज्ञानस्य वा, तद्विशेषणाज्ञानस्य वा

प्रकाश.

लक्षणत्वेन तद्विशेषमात्रग्रहणं नेत्यत आह—उपलक्ष्यत्वाकारेणेति । **मोक्षासाधनत्वादिति** । निर्विकल्पज्ञानस्यैव तथात्वादिति भावः । ननु विशिष्टज्ञानेन विशेष्यसिद्धावपि विशेषणाविषयकतया विशेष्यज्ञानार्थं तदित्यत आह—**न चेति** । उक्तं सङ्गृह्णाति—**तथा चेति** । एवं सविशेषज्ञानं न निर्विशेषज्ञानार्थमित्युक्तम् । अस्तु वा तत् । तथाऽपि सविशेषज्ञानं दृष्टद्वारा निर्विशेषज्ञाने हेतुरुत अदृष्टद्वारा, प्रतिबन्धकदुरितनिवृत्तिद्वारा वा । आद्येऽपि किं दृष्टमज्ञानध्वंस, चित्तवशीकरणं वेति विकल्पान् हृदि निधाय क्रमेण निरस्यति—**किं चेति** । "तदभावविशिष्टज्ञानस्य वा" इत्यादिस्त्रितयं निर्विशेषज्ञानशब्दार्थः । अ-

चन्द्रिका

क्वाप्यदर्शनात् । रूपादियुक्तपराग्भूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगाच्च । निषेधोपयोगिनो बुद्धिपूर्वकारोपस्यापि शब्दप्रमाणानपेक्षत्वात् । नह्यत्र 'घटोऽस्ति' इत्युक्त्वा अत्र 'स नास्ति' इति वक्तव्यम् । नाप्यदृष्टद्वारा, विहितक्रियाजन्यत्वाददृष्टस्य त्वन्मते च ज्ञानस्य अविधेयत्वात् । नापि ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा, तस्य नित्यादिकर्मणैव निवृत्तेः । नित्यादिकर्मणामपीहैव शास्त्रे निरूपणापत्तेश्च । त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वाच्च । न च व्यावहारिकं दुरितं व्यावहारिकसविशेषब्रह्मज्ञानकार्यम्, येनाज्ञाननिवृत्त्या तत्कार्यं पापं निवर्तेत। एतेन—सविशेषज्ञानसन्तानरूपं निदिध्यासनं अदृष्टद्वारा वा दु-

प्रकाश.

युक्तं चेदं चित्तवशीकरणद्वारा तदर्थत्वमित्याह—**रूपादीति** । हिरण्यश्मश्रुत्वादिरूपादियुक्तत्वात् पराग्भूतेत्यर्थः । ननु निषेधज्ञाने प्रतियोग्यारोपस्यावश्यकतया विशेषाभावज्ञानाय विशेषज्ञानं युक्तमेवेत्यत आह—**निषेधेति** । तदेवाह—**नहीति** । तथा च ब्रह्म निर्विशेषमिति वक्तुं रूपादिविशेषकथनं न युज्यत इति भावः । द्वितीयं निरस्यति—**नापीति** । अस्तु ज्ञानं विहितक्रियेत्यत आह—**त्वन्मते चेति** । तृतीयं निरस्यति—**नापीति**। दुरितनिवर्तकत्वं च ज्ञानस्य किं साक्षादुत अज्ञाननिवृत्तिद्वारा । नाद्य इत्याह—**तस्येति** । द्वितीय आह—**न च व्यावहारिकमिति** ।

चन्द्रिका

रितनिवृत्तिद्वारा वा, चित्तवशीकरणद्वारावा निर्विशेषज्ञानार्थमिति निरस्तम् । श्रुतहान्याद्यापातात् । सविशेषनिदिध्यासनस्यापि निर्विशेषनिदिध्यासनवत् स्वविषयापरोक्षहेतुताया एव युक्तत्वाच्च । "दशमस्त्वमसि" इत्यादाविव शाब्दज्ञाने चित्तवशीकरणानपेक्षणाच्च । आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्च निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनादेव सिद्धे । चित्तवशीकरणाभावे सविशेषनिदिध्यासनस्यैव अयोगाच्च । नापि सविशेषध्यानं निर्विशेषज्ञानार्थमिति द्वितीयः, ज्ञानविशेषो ध्यानं इत्यन्यत्रोक्तत्वात् । इह "य एवं वेद" इति

प्रकाशः

एतेनेत्युक्तमेवाह——श्रुतेति । सर्वपापराहित्यरूपश्रुतफलहानिः, अश्रुतफलकल्पना चेत्याद्युक्तदोषानिवृत्तेरित्यर्थः । अयुक्तं चान्यनिदिध्यासनेनान्यज्ञानमित्याह—सविशेषेति । चित्तवशीकरणोपयुक्ततया तन्निदिध्यासनं, न तु साक्षान्निर्विशेषज्ञानायेति चेत्, तत्किं शाब्दज्ञाने वा अपरोक्षज्ञाने वा । नाद्य इत्याह—दशम इति । न द्वितीय इत्याह—आपरोक्ष्येति । चित्तैकाग्र्यादेः प्रागेव सिद्धत्वान्न सविशेषज्ञानसाध्यत्वमित्याह—चित्तेति । एवं सविशेषज्ञानं निर्विशेषज्ञानार्थमित्याद्यो निरस्तः । द्वितीयं निरस्यति—नापीति । 'अन्यत्र' न्यायामृते तृतीयपरिच्छेदे । तथा च प्रागुक्त एव दोष इति भाव. । इहेति ।

चन्द्रिका

ज्ञानार्थविदिधातुश्रवणाच्च । भगवति रूपं तात्त्विकमित्यन्यत्रोक्तत्वाच्च । "हिरण्मयः पुरुषो दृश्यते" इति अपरोक्षज्ञानविषयत्वोक्तेश्च । न हि 'योषित्यग्निर्दृश्यते' इत्युच्यते। किञ्च योषिदादेरग्नित्वाद्यभावेऽपि तथा ध्यानवत् निर्विशेषब्रह्मण एव हिरण्यश्मश्रुत्वादिना ध्यानसम्भवेन सविशेषब्रह्मणः साधकानुग्रहार्थमैच्छिकरूपपरिग्रहोक्तिरयुक्ता । तस्मान्न सविशेषनिरूपणं निर्विशेषज्ञानार्थम् । अन्यथा वैपरीत्यं स्यात् । "सत्यं ज्ञानं" इत्यादिसद्ब्रह्मनिरूपणमपि 'असद्वा इदमग्र आसीत्" इत्यादिश्रुतिसिद्धासद्ब्रह्मज्ञानार्थं स्यात् ।

प्रकाश

"उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति श्रवणादित्यर्थः । ननु 'हिरण्मय' इत्याद्युक्तरूपस्य मिथ्यात्वात् तद्विषयकं ध्यानं कथं ज्ञानं स्यादविद्यमानस्य ज्ञानायोगेऽपि "योषितमग्निं ध्यायीत" इतिवद्ध्यानस्योपपत्तेरित्यतआह—**भगवतीति** । '*अन्यत्र*' न्यायामृते । तात्त्विकत्वे विषयवाक्यस्थां युक्तिमाह—**हिरण्मय इति** । तावता कथं तात्त्विकत्वमित्यत आह—**नहीति** । यदि मिथ्याभूतस्यापि ध्यानं युक्तं, तर्हि सविशेषोक्तिरयुक्तेति दोषान्तरमाह—**किञ्चेति** । **अन्यथेति** । अन्यनिरूपणादन्यज्ञाने सतीत्यर्थः । निर्विशेषनिरूपणं सविशेषज्ञानार्थं स्यादित्यर्थः । अतिप्रसङ्गान्तरमाह—**सत्यमिति** । 'अन्यथा' इत्यत्रापि सम्बध्यते । उक्तातिप्रसङ्गं संगृह्णन्

चन्द्रिका

एवं च—

असद्रूपं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सद्ब्रह्मप्रतिपादने ॥
निर्विशेषं परं धर्ममनुष्ठातुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणे ॥

इति स्यात् । शक्यं हि ब्रह्मकाण्डे लक्षणया निर्विशेषं ब्रह्मेव, कर्मकाण्डेऽप्यग्निहोत्रादिसविशेषधर्मविलक्षणः कश्चिन्निर्विशेषो धर्मः प्रतिपाद्यत इति वक्तुम् । किं च—

आद्यसूत्रे धर्मशब्दात् द्वितीये भेदशब्दतः ।
निर्धर्मकत्वैमक्यं च निरस्तं परवस्तुनः ॥
धर्मो भेदश्च मिथ्या चेत् श्रुतिसूत्राप्रमाणता ।
व्याख्यात्र्याजेन चोक्ता स्यात् त्वया सौगतमोहदात् ॥

प्रकाश.

अतिप्रसङ्गान्तरमपि श्लोकेनाह—एवं चेति । ननु निर्विशेषब्रह्मेव निर्विशेषधर्म एव नास्तीति कथमतिप्रसङ्ग इत्यत आह—शक्यं हीति । यथा अप्रतीयमानमपि निर्विशेषं लक्षणया प्रतिपाद्यतया कल्प्यते, तद्वदित्यर्थः । अत्राधिकरणे सूत्रद्वयमपि परस्य प्रतिकूलमित्याह—किं चेति । 'ऐक्यं' जीवात्मभिः । सूत्रितयोर्धर्मभेदयोर्व्यावहारिकत्वात्तादृशस्य मयाऽङ्गीकारात् को दोष इत्यत आह—धर्म इति । श्रुतीति । "सर्वेभ्यः पाप्मभ्य उदितः"

चन्द्रिका

परमतेऽस्याधिकरणस्य "अन्तर उपपत्ते" इत्यनेन पौनरुक्त्य, स्वमते तदभावश्च तत्रैव वक्ष्यते ॥

प्रकाश

इत्यादिष्वुदाहृतश्रुतिसूत्रयोश्चेत्यर्थ । ननु कथ 'सौहृदात्' इति, "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धौ 'सौहार्दात्' इति वाच्यमिति चेत्, अत्राह दुर्घटवृत्तिकार—सज्ञापूर्वकविधेरनित्यत्वात "हृद्भग" इत्युभयपदवृद्धेरप्रवृत्ते, "तद्धितेष्वचामादे" इत्यादिवृद्धिरेवेति । "अर्थवतो ग्रहणे नानर्थकस्य" इति परिभाषाया "स्व रूपं शब्दस्याशब्दसज्ञा" इत्यत्र रूपग्रहणेन ज्ञापितत्वात्, "हृद्भग" इति सूत्रे ऽर्थवत एव हृच्छब्दस्योपादानात्, "सुहृद्दुर्हृदौ मित्रामित्रयो" इति निपातिते सुहृच्छब्दे समुदायस्यैवार्थवत्त्वेन तदवयवहृच्छब्दस्यानर्थकत्वात्तस्योभयपदवृद्धिर्न भवति, किन्त्वादिवृद्धिरेवेति । चान्द्रास्तु "हृद्भग" इत्यत्र प्रतिपदोक्तहृच्छब्दस्यैव हृदयपर्यायस्य ग्रहण, न तु—"हृदयस्य हृल्लेखयदण्लासेषु" इत्युक्तहृदादेशस्य । 'सौहृद' इत्यादौ तु हृदादेश एवेति मन्यन्ते। अत एव "क्षणभिन्नसौहृद" इति कुमारसम्भवे प्रयोग इति। ननु सुधोक्त पौनरुक्त्यदूषण कस्मान्नोक्तमित्यत आह—परमत इति। इद च पौनरुक्त्य परमतद्वयेऽपि सममिति ध्येयम् । एतेन यत्केन चित्प्रलपित, भामत्युक्तमेव वाक्यमुदाहृत्य, "एवमेवास्याक्षिणी" इति नयनद्वयोपदेशाद्देवताविशेष एव आदित्यान्तस्थ इति प्राप्ते, "स

प्रकाशः

एष सर्वेषां लोकानामीष्टे" इति सर्वलोकेश्वरत्वधर्मोपदेशात्तस्य च "एक एव रुद्रो न द्वितीयाय तस्थे" इति शिवनिष्ठत्वाच्छिव एवादित्यान्तस्थः । नयनद्वयोपादानं तु विकसितपुण्डरीकसादृश्यस्य द्वयोरेव भावात्तृतीयस्य मुकुलितत्वेन तदभावाद्युज्यत इति, तन्न, उदाहरणानौचित्यस्योक्तत्वात् । पौनरुक्त्यस्य वक्ष्यमाणत्वात् । शिवस्य विरूपाक्षताप्रसिद्ध्या पुण्डरीकाक्षत्वस्य विष्णुलिङ्गतया प्रसिद्धत्वात्, "ध्येयस्सदा" इत्यादिवचनाविरुद्धत्वात् ।

तापनी पाचनी चैव शोषणी च प्रकाशिनी ।
नैव राजन्रवेः शक्तिः शक्तिर्नारायणस्य सा ॥

इति पाद्मवचनविरोधाच्च ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इति गीताविरोधाच्च । "अहं तत्तेजो रश्मीन्नारायणम्" इति,

वृत्रं यदिन्द्र शवसा वधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ।
यत्सूर्यस्य हरितः पतन्तीः पुरस्सतीरु परा एतशोकः ।
येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ।

"यमन्तस्समुद्रे कवयोवयन्ति" इत्यादितैत्तिरीयभाष्ये "य एषः" इति वाक्यस्य वैष्णवत्वसमर्थनाच्च । छान्दोग्यभाष्ये विष्णुपरत्वेनैव प्रमाणैर्व्याख्यातत्वात् । रुद्रादिशब्दानां "नामानि सर्वाणि"

चन्द्रिका

टीकाक्षरार्थस्तु—प्राबल्याद्यविवेकेनेति । श्रुतिलिङ्गाधिकरणसिद्धान्तात् प्रागिव, श्रुतिं प्रबला, लिङ्गं तु दुर्बलमित्यविवेकेनेत्यर्थः । यद्वा—श्रुते स्वतो बलवत्त्वात्, लिङ्गस्य च निरवकाशत्वेन बलवत्त्वात्, इदं प्रबलं इदं दुर्बलमित्यविवेकेनेत्यर्थः ।

प्रकाश

इत्यादिश्रुत्या "सोऽन्तकरस रुद्रः स प्राणभृत्" इत्यादिश्रुत्या एतदधिकरणे भाष्यकृदुदाहृतवचनव्रातेन च विष्णुपरत्वाच्च । "तमेताः सप्ताक्षितय उपतिष्ठन्ते या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः" इत्यादौ रुद्रस्याक्षिस्थोपासकत्वोक्तेश्च । एतेन, यदप्युक्तं—महोपनिषदि "अन्तरादित्ये हिरण्मयः पुरुषः" इत्युक्त्वा, "एष पुरुष एष भूतानामधिपतिः" इति तस्य भूतपतित्वमुक्त्वा, "सर्वो वै रुद्र." इत्यारभ्य "हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतये" इत्युपसंहारेण तत्समाख्यानादत्रापि तथेति, तदपि निरस्तम् । रुद्रादिशब्दवाच्यत्वस्य विष्णावेव मुख्यत्वादिति दिक् ॥

"अदृश्यत्वलिङ्गमिन्द्रादिश्रुतिश्च प्राबल्याद्यविवेकेन सन्देहबीजम्" इति वाक्ये अविवेकशब्दप्रतीतेर्द्वेधा व्याचष्टे—श्रुतिलिङ्गेति । पूर्वतन्त्रीयं श्रुतिलिङ्गाधिकरणं प्रागुक्तम् । "नामनिर्णयेन लिङ्गनिर्णयेऽपि लिङ्गस्य सङ्गतत्वात् ग्रहणम्" इत्यत्र नाम्नोऽसङ्गतत्वादग्रहणमिति सूचितम् । तत्कथं सङ्गतत्वासङ्गतत्वे

चन्द्रिका

सङ्गतत्वाद्ग्रहणमिति । अल्पाक्षरे सूत्रे एकलिङ्गसमन्वयोक्त्या अनेकनामसमन्वयस्य आर्थिकसिद्धेरेव सङ्गतत्वात्, अनेकसमन्वयोक्त्या त्वेकसमन्वयस्य आर्थिकसिद्धेरसङ्गतत्वात्, एकनामसमन्वयोक्त्या चोदाहरणवाक्यस्थसजातीयनामसमन्वयाक्षेपस्य विजातीयलिङ्गसमन्वयाक्षेपस्य च सति गत्यन्तरे गौरवापादकतया क्लिष्टत्वेनासङ्गतत्वात्, सजातीयस्योपलक्षणम् विजातीयस्य त्वाक्षेप इत्यस्यापि वैरूप्येणासङ्गतत्वादित्यर्थः । यद्वा—यत्रैकं साक्षादन्यदर्थादिति नामलिङ्गात्मकमुभयं समन्वेतव्यं, तत्र अन्यत्रनिरूढनामसमन्वयस्य प्रथमं बुद्ध्यावनारोहात् न तन्मुखेन लिङ्गसमन्वयः सङ्गतः। अनिरूढलिङ्गमुखेन तु नामसमन्वयस्सङ्गतः। अतएव पूर्वं आनन्दमयलिङ्गसमन्वयमुखेनानन्दादिनामसमन्वय उक्तः । यस्तु द्वितीयपादे वैश्वानराधिकरणे नामसमन्वयमुखेन लिङ्गसमन्वयः, स प्रथमपादे अन्यत्रनिरूढनामसमन्वयस्योक्तत्वेन बुद्ध्यारोहात् पाचकत्वादिलिङ्गानामन्यत्र निरूढत्वात् बहुत्वाच्च युक्त इत्यर्थः । यद्वा—

प्रकाशः

इत्यतोऽनेकप्रकारेणाह—अल्पाक्षर इति । तर्ह्येकमेव नाम समन्वीयतां अनेकनामलिङ्गसमन्वयार्थमित्यत आह—एकनामेति । ननु न गौरवं, अनेकनाम्नामुपलक्षणत्वेनैकनामोपादानात्, लिङ्गस्य चार्थादेव समन्वयसिद्धेरित्यत आह—सजातीयस्येति । आनन्दमयलिङ्गेति । तत्त्वप्रदीपानुसारेणेयमुक्तिरिति ध्येयम् । एवं तर्हि वैश्वानराधिकरणविरोध इत्यत आह—यस्त्विति ।

चन्द्रिका

अन्तस्स्थनिष्ठतया श्रुतेन समुद्रस्थत्वादिना अन्तस्स्थस्यैव विष्णुत्वसाधने सामानाधिकरण्येन सङ्गतिः, इन्द्रादेस्तु तत्साधने वैयधिकरण्येन असङ्गतिस्स्यादित्यर्थः । यद्वा—अन्तस्स्थस्य अविष्णुतया आनन्दमयस्यापि विष्णुत्वाक्षेपो युक्तः, तद्धर्मस्य अदृश्यत्वस्य अन्तस्स्थे साक्षाच्छ्रवणात् । न त्विन्द्रादेरविष्णुत्वेन, तत्रादृश्यत्वाश्रवणात् । ततश्च पूर्वाधिकरणसङ्गत्यर्थं लिङ्गग्रहणमित्यर्थः ॥

प्रकाशः

'इन्द्रादेस्तु' इन्द्रादिशब्दार्थस्य तु, 'तत्साधने' अन्तस्स्थत्वसाधने, 'इन्द्रादिस्तद्धर्मोपदेशात्' इत्युक्ताविति यावत् । "समुद्रे अन्तः कवयो विचक्षते" इत्यस्यान्तस्स्थनिष्ठतयेन्द्रादिनिष्ठत्वाभावादसङ्गतिरित्यर्थः । अविष्णुत्वेनेति । 'आनन्दमयस्य विष्णुत्वाक्षेपः' इति सम्बध्यते । शिष्टमुपन्यासमुखेनैव विवृतमिति भावः ॥

इति अन्तस्स्थत्वाधिकरणम्.

# —अथ आकाशाधिकरणम्.—

तत्त्वप्रकाशिका.

अत्र लोकतोऽन्यत्रप्रसिद्धाकाशनाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः। "को ह्येवान्यात्" इत्याकाशशब्द आनन्दमये प्रयुक्तः। स एव च्छन्दोगश्रुतौ पठ्यते—"अस्य लोकस्य कागतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्। स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इति। स चाकाशो यदि विष्णोरन्यस्तदा प्रागुक्तोऽपि स एवेत्यानन्दमयोऽप्यन्यः प्रसज्यते। अत स्स निर्णयः। स आकाशोऽत्र विषयः। विष्णुरन्यो वेति सन्देहः। आकाशशब्दस्यानन्दमये प्रयुक्तत्वमन्यत्र प्रसिद्धिश्च सन्देहबीजम्। भूताकाश एवायमिति पूर्वः पक्षः, आकाशशब्दस्य तत्र रूढत्वात्। न च वाच्यम् योगवृत्त्याऽऽकाशशब्दो विष्णौ सावकाश इति, बाधकं विनाऽमुख्यार्थाङ्गीकारायोगात्। न चाकाशस्य भगवदधीनत्वेन तत्रैवाकाशशब्दो मुख्य इति युक्तम्, आकाशस्याचेतनत्वेनान्याधीनत्वायोगात्। चेतनस्य हि चेष्टादावन्याधीनत्वं सम्भवतीति। आकाशशब्दस्यावकाशेऽपि रूढत्वादत्र भूताकाशग्रहणे को विशेषहेतुरिति चेत्, पृथिवीगतित्वोपपादनाय "सर्वाणि ह वा इमानि

"को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इत्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोः, इति न मन्तव्यम्, यतः—

## ॥ ओं आकाशस्तल्लिङ्गात् ॥

"अस्य लोकस्य का गति रित्याकाश इति होवाच" इत्यत्र भूताकाशस्य प्राप्तिः। न चासौ युज्यते। किन्तु विष्णोरेव।

---

तत्त्वप्रकाशिका

भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिना आकाशस्य सर्वभूतकारणत्वलयाधिकरणत्वादेरुक्तत्वात्। तच्च "आकाशाद्वायुः" इत्यादिना भूताकाशस्यैव प्रसिद्धम्। अतो भूताकाश एवायमिति मनसि निधाय पूर्वपक्षफलमाह—को हीति। एवमाकाशे च्छन्दोगश्रुत्युक्ते भूताकाशे सति, "को हि" इति तैत्तिरीयश्रुत्युक्तोऽपि स एव स्यात्। तथाच लोकचेष्टकत्वहेतुराकाशस्यैवानन्दमयत्वे कथितस्स्यान्न विष्णोः। ततश्च स एवानन्दमयो भवति, आकाशस्याचेतनत्वेनानन्दानुपपत्तावप्यभिमानिद्वारा तदुपपत्तेरिति भावः। अनेनैव, आकाशशब्दस्यानन्दमये प्रयुक्तत्वाद्विष्णुराकाशः किं न स्यादिति परास्तम्। रूढेर्बलवत्त्वेन तस्यापि बाधोपपत्तेरिति। सिद्धान्तयति—इतीति। कुतो न मन्तव्यमित्याशङ्कायां हेतुतया सूत्रमुपादत्ते—यत इति। विषयादेः पूर्वं मुखतोऽनुक्तेस्तदनुवादपूर्वकं सूत्रं व्याचष्टे—अस्येति। यद्यपि "अस्य लोकस्य का गतिः" इति वाक्ये भूताकाशस्योक्तरीत्याऽस्ति

"स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इत्यादितल्लिङ्गात्।
विष्णोर्नु कं वीर्याणि प्रवोचं य पार्थिवानि विममे रजांसि।
"परोमात्रया तन्वा वृधान" इत्यादिना तस्यैव हि तल्लिङ्गम्।

अनन्तो भगवान्ब्रह्म आनन्देत्यादिभि पदैः।
प्रोच्यते विष्णुरेवैकः परेषामुपचारतः॥

इति ब्राह्मे।

तत्त्वप्रकाशिका

प्रतिपाद्यत्वप्राप्तिः, तथाऽपि नासावत्र वाच्यो युज्यते, अपितु विष्णुरेव युज्यते, परोवरीयस्त्वादिविष्णुलिङ्गस्याकाशनिष्ठतया श्रवणात्। एवं यतस्तल्लिङ्गात् छन्दोगश्रुत्युक्ताकाशो विष्णुः, ततश्च "कोह्" इत्यत्रापि स एव प्रतिपाद्यत इति तस्यैवानन्दमयत्वे हेतुरुक्तोऽत आकाशस्यानन्दमयत्वे हेतुरुक्त इति न मन्तव्यमित्यर्थः।

परस्मादुत्तम प्रोक्तं परो इति ततः परम्।
परोवरं परं तस्मात्प्रोक्तं पारोवरीयकम्॥

इति स्मृतिः। उच्चत्वेन गीत उद्गीतः स एवोद्गीथः। ननु सर्वोत्तमत्वानन्तत्वयोः कुतो विष्णुलिङ्गत्वमित्यत आह—विष्णोरिति। विष्णोर्वीर्याणि को नु प्रवक्ति योऽपि पार्थिवपरमाणून् गणयतीति तस्यानन्तत्वमुच्यते। "परो मात्रया" इत्यनेन सर्वोत्तमत्वम्। ननु अनन्तत्वं "अनन्तामाशावत्पश्यन्" इत्याकाशस्यापि स्मर्यते। अतः कथं विष्णोर्लिङ्गमित्यत आह—अनन्त इति।

"नामानि सर्वाणि यमाविशन्ति" इति चोक्तम् ॥

तत्त्वप्रकाशिका

ननु श्रुत्या पूर्वपक्षिते कथं लिङ्गेन निर्णयो लिङ्गस्य श्रुतितो दौर्बल्यादित्यत आह—नामानीति । श्रुत्या पूर्वपक्षितेऽपि लिङ्गमात्रेण निर्णयो घटते, आकाशश्रुते. "नामानि सर्वाणि" इति श्रुतिबलेन विष्णौ सावकाशत्वाल्लिङ्गस्य चाकाशेऽनवकाशत्वात्, दुर्बलेनाऽपि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति भावः । अस्तु लिङ्गेन श्रुतेर्बाधः, तथापि विष्णौ श्रुतिरमुख्यैव, अन्यत्र रूढत्वाद्विष्णौ यौगिकत्वादिति चेन्न, आकाशस्य भगवदधीनत्वेन तत्रैव मुख्यत्वान्महायोगविद्वद्रूढ्योर्भावाच्च । न चाकाशस्यापराधीनत्वम्,

नभो ददाति श्वसतां मार्गं यन्नियमाददः ।

इत्यादेः । न च भूतकारणत्वोक्तिविरोधः, तस्य विष्णावेव सम्भवात् । तस्मादाधिभौतिकसर्वशब्दोपलक्षकाकाशशब्दवाच्यो विष्णुरेवेति स एवानन्दमय इति स्थितम् ॥

चन्द्रिका

## ओं आकाशस्तल्लिङ्गात् ओं.

अत्राधिभूतगताकाशादिनाम्नां समन्वय उच्यते । भूतेष्वाकाशस्य प्राधान्यात् सूत्रे तस्य मुखतः कीर्तनमन्येषां तूपलक्षणम् । अत एव सङ्गतिटीकायां "आकाशनाम्नः" इत्युक्त्वा अधिकरणोपसंहारटीकायां "आधिभौतिकसर्वशब्दोपलक्षक" इत्युक्तम् ।

प्रकाश

ओं आकाशस्तल्लिङ्गात् ओम् । अत्र सङ्गतिटीकायां "आकाशनाम्न समन्वयः" इत्युक्तम्, तदयुक्तं, एकोदाहरणस्य योगारम्भाप्रयोजकत्वात् । तथात्वे विश्वतोमुखत्वहानेरित्यत एतदधिकरणप्रतिपाद्यं दर्शयन् विषयोपाधिमाह—अत्रेति । ननु सूत्रे आकाशपदस्यैव ग्रहणात् "आकाशादि" इति कथम् । नचेतरोपलक्षकत्वे नैकस्योपादानम्, तथाऽपि अस्यैवोपादाने हेत्वभावादित्यत आह—भूतेष्विति । प्राधान्यादिति । "आकाशः संभूतः आकाशाद्वायुः" इत्यत्र सर्वभूतादित्वेनोपादानादिति भावः । उक्तं च सुधायाम्—"आकाशस्य भूतेषु प्राधान्यात्तच्छब्दसमन्वयं हरावाह सूत्रकारः" इति । ननु टीकाया "आकाशनाम्नो ब्रह्मणि समन्वयप्रतिपादनात्" इत्येकस्यैवोपादानात् 'आकाशादि' इति कथमित्यत आह—अत एवेति । नन्वत्र वक्ष्यमाणरीत्या स्वभावप्रवृत्तिनिमित्तकाः शब्दाः समन्वीयन्ते । ते च भूताभूतशब्दसाधारणा इति भौतिकमात्रोपलक्षणत्वमयुक्तमित्याशङ्क्य,—

चन्द्रिका

यद्यपिभूतेतरवाचिनामप्येतन्न्यायविषयाणामनेन समन्वयस्सिद्ध्यति ! तथाऽपि सजातीये भूतशब्दे प्रथमं बुद्ध्यवतारादाधिदैविकेन्द्रादिशब्देषु आध्यात्मिकप्राणादिशब्देषु च स्वभावप्रवृत्तिनिमित्तकत्वाभावेन इतरत्र एतन्न्यायाप्रवृत्तेश्च टीकायामाधिभौतिकोपलक्षकतोक्तिः । न चात्रापि पूर्वत्रेवाकाशनामसमन्वयार्थमनन्तत्वादिलिङ्गसमन्वय एवोच्यतामिति शङ्कचम्, पूर्वत्रान्तस्स्थत्वरूपैकलिङ्गसमन्वयेन बहुनामसमन्वयात्, अत्र तु 'आकाशः' इत्येकनामसमन्वयेन बहुलिङ्गसम-

प्रकाशः

द्वेधा समाधानमाह—**यद्यपीति** । **एतन्न्यायेति** । अचेतनस्वभावत्वान्न भगवन्नियम्यत्वमित्यादिपूर्वपक्षन्यायविषयाणामित्यर्थः । 'अनेन' स्वभावस्यापीशाधीनत्वसाधकेनाधिकरणेनेत्यर्थः । **आधिदैविकेति** । अतीताधिकरणविषयेषु उत्तराधिकरणविषयेषु चेत्यर्थः । एतेनाधिदैविकादिव्यावृत्त्यर्थमेव तयोक्तिरित्युक्तं भवति। ननु पूर्वाधिकरणे लिङ्गस्य समन्वितत्वेन बुद्धौ विपरिवर्तमानलिङ्गत्यागे हेत्वभावात्तदेव समन्वेतव्यम्, न तु नामेत्याक्षिप्य हेतुमाह—**न चात्रापीति** । **नामेति** । तथा च फलतः पादसङ्गतिर्भविष्यतीति भावः । अत्र किं सर्वभूतकारणत्वादिलिङ्गस्य समन्वयश्चोद्यते, सिद्धान्त्यभिमतस्य वा । आद्यआह—**पूर्वत्रेति** । **एकनामेति** । वैश्वानराधिकरणवदिति भावः । ननु अत्रापि आकाशनाम्नो बहुकृत्वः श्रवणेन बहुनामसमन्वयोऽस्तीति चेत्, न,

चन्द्रिका

सेद्धेः । अनन्तत्वादेः सिद्धान्तहेतुत्वेन तत्र संशयानुदयाच्च ॥

प्रकाशः

निमित्तभेदाभावेन एकसमन्वये सति पुनः श्रुतसमन्वये धक्याभावेन भिन्नप्रवृत्तिनिमित्तकनामबहुत्वस्य विवक्षितत्वेनात्र वादिति तात्पर्यात् । न च वाच्यमेकलिङ्गसमन्वयेनाप्यने- ्ाना नाम्नश्च समन्वयोऽर्थात् सिद्ध्यतीति लिङ्गमेव समन्वे- ्ति, एकलिङ्गसमन्वयेन सजातीयविजातीयसमन्वयाक्षेपस्य गत्य- सति गौरवहतत्वात् । न चान्यत्रनिरूढनामसमन्वयस्य प्रथमं वनारोहात् अन्यत्रानिरूढलिङ्गसमन्वय एव वाच्य इति म्, पूर्वत्र तादृशस्यापीन्द्रादिनाम्नः समन्वयोक्त्याऽत्र बुद्धा हसम्भवादिति भावः । द्वितीये त्वाह—अनन्तत्वादेरिति । यथा सन्दिग्धासिद्धत्वापातादिति भावः । उपलक्षणमेतत् । त्रप्रसिद्धाकाशादिश्रुतित्वादिरूपपूर्वपक्षन्यायस्य मुखत. सूचनामा- त्यापि ध्येयम् । नन्वेतत् "समुद्रान्तरिथतत्वादेर्विष्णुलिङ्गत्वनिश्च- य्यनन्तत्वादेस्तदानिश्चयात्" इति वक्ष्यमाणेन विरुध्यत इति चेन्न, तवाभिप्रायेणात्र स्वारसिकसंशयानुदयोक्तेः । तत्राकाशश्रुत्यादिसा- र्थेणाहितसंशयोक्तेः । श्रुत्याहितसंशयोपादानेन लिङ्गसमन्वयोक्त्या जीव्यत्वेन श्रुतिसमन्वयस्यैव न्याय्यत्वादिति । तात्पर्यादिति । ा नामसमन्वय एव युक्त, मुखत. पादसङ्गतेरपि सत्त्वादिति तम् । एतेन "आकाशनाम्नः" इत्यादिसङ्गतिटीका समर्थिता ।

चन्द्रिका

न्तरसङ्गतिस्तु--अभ्यधिका शङ्कां कृत्वा पूर्वन्याय एवातिदिश्यत देशिकी । यद्यपि "अत एव प्राणः" इत्याद्यधिकरणत्रयेऽप्यन्त णन्यायातिदेश', तथाऽप्यधिकाशङ्काक्रमात्तत्क्रमः, । शङ्का तत्र तत्र वक्ष्यते । यद्वा—"अकाशाद्वायु. वायोरग्निः" या आकाशादेर्वाय्वादिकारणत्वोक्तेस्तदनुसारेण आकाशमा· देरधिकरणाना क्रमः ।

प्रकाशः

धिकरणसङ्गतिमाह--अनन्तरेति । पूर्वसिद्धान्तस्योपरि तद शङ्कां कृत्वा तदुपमर्दनपूर्वकं निरवकाशलिङ्गेन सावकाश· स्वरूपन्याय एवेत्यर्थः । अनेन

कृत्वा त्वभ्यधिकाशङ्कां पूर्वमेवातिदिश्यते ।
तत्रातिदेशिकीप्रोक्ता ॥

लक्षणं स्मारितं भवति । इयं न सङ्गतिः "चेष्टा हि" गुव्याख्यानात् स्पष्टं प्रतीयत इति भावः । नन्वेवमुत्तरे· पूर्वानन्तर्यं स्यात्, न तु व्यवधानमित्याशङ्क्याह—यद्य· । 'तदनुसारेण' श्रुतिक्रमानुसारेण । वायोरेवाध्यात्मं दग्निज्योतिश्शब्दयोरेकार्थत्वादिति भावः । ननु यदि पूर्वे· शिकी सङ्गति', तर्हि "—'कोह्येवान्यात्कः प्राण्यात् यदेष । आनन्दो न स्यात्' इत्याकाशस्याऽऽनन्दमयत्वे हेतु· न तु विष्णोरिति न मन्तव्यम्" इत्यानन्दमयाधिक सङ्गतिपरभाष्यं विरुध्येतेत्यनस्तद्भाष्यं न सङ्गतिपरं, किन्तु

चन्द्रिका

"को ह्येवान्यात्" इतिभाष्ये तु "आकाश इति होवाच" इत्यत्र आकाशस्य विष्ण्वन्यत्वे "यदेष आकाश" इत्यत्रापि अन्यः स्यादिति, आनन्दमयोऽप्यन्यः, प्रसज्येतेति पूर्वपक्षे आनन्दमयाधिकरणाक्षेपात्, सिद्धान्ते च तत्समाधानात्सफलोऽयं विचार इत्युक्तम् । न च यथा सिद्धान्ते "आकाश इति होवाच" इत्यत्राकाशशब्दस्य ब्रह्मपरत्वेऽपि, "आकाशः सम्भूतः" इत्यत्र भूतपरत्वं, तथा सिद्धान्ते "यदेष आकाशः" इत्यत्रापि भूतपरत्वमस्तु ।

प्रकाशः

फलमात्रपरमितिभावेनाह—को ह्येवान्यादितीति । 'अयं विचारः' आकाशस्य विष्णुत्वविचारः । एतेन टीकाऽपीत्थमेव व्याख्येयेत्युक्तं भवति । अनन्तरसंङ्गतिस्तूत्तरमस्थानाद्धयेयेति तात्पर्यमिति भावः । ननु यदुक्तं भाष्यटीकयोः "आकाश इति होवाच" इत्यत्राकाशो भूतं चेत्, "को ह्येवान्यात्" इत्यत्रत्योऽप्याकाशः भूतं स्यात् । ततस्तस्य विष्णुत्वसिद्धये "आकाश इति होवाच" इत्ययमाकाशो विष्णुरिति विचारित इति साफल्यं विचारस्येति, तदयुक्तं, छान्दोग्यस्याकाशस्य विष्णुत्वेऽपि "को ह्येवान्यात्" इत्यत्रत्यस्य विष्णुत्वासिद्ध्या विचारस्य साफल्यायोगादिति भावेन दृष्टान्तोक्तिपूर्वमाक्षिपति–न चेति । "शङ्क्यं" इत्यन्वयः । भूतपरत्वमिति । ननु, "कारणत्वेन चाकाशादिषु" इत्यधिकरणे सम्भूतवाक्यगताकाशादिशब्दस्य ब्रह्मपरत्वं वक्ष्यते । यद्वक्ष्यति "भूतपरत्वे शङ्किते तन्निरासः" इति ।

चन्द्रिका

*यदि तु "यदेपः" इत्यत्र ब्रह्मलिङ्गात् ब्रह्मपरता, तर्हि यथा सिद्धान्ते सम्भूतवाक्ये आकाशशब्दस्य भूतलिङ्गात् भूतपरत्वेऽपि* "यदेपः" इति वाक्ये ब्रह्मलिङ्गात् ब्रह्मपरता, तथा पूर्वपक्षे "इति होवाच" इतिवाक्ये भूतपरत्वेऽपि "यदेप·" इत्यत्र ब्रह्मलिङ्गात् ब्रह्मपरता भविष्यतीति, नानन्दमयाधिकरणाक्षेपइति शङ्क्यम्,

प्रकाश·

तथा च कथं भूतपरत्वोक्तिरिति चेत्, सत्यं, तत्र भूतपरत्वापरित्यागेनैव ब्रह्मपरत्वाभिधानेन भूतपरत्वस्यापि सत्त्वात् । अन्यथा भूतोत्पत्त्यसिद्धिप्रसङ्गात् । वाक्यान्तरस्याप्येतत्तुल्यत्वात् । अत एवोक्तं प्राक्—"प्राबल्यं हि तस्य शब्दस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्याऽन्यपरत्वं विनाऽनुपपद्यमानत्वम्" इति । अत एवानुव्याख्याने—

भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः ।

इत्युक्तमिति भावः । ननु सम्भूतवाक्ये भूतलिङ्गाद्भूतपरत्वेऽपि "को ह्येवान्यात्" इत्यत्र जगच्चेष्टकत्वादिब्रह्मलिङ्गात् ब्रह्मपरता एतदधिकरणसिद्धान्तन्यायेन स्यात् । तथा च सिद्धान्ते प्रयोजनं सेत्स्यतीत्याशङ्क्य, तर्हि पूर्वपक्षे पूर्वोक्ताक्षेपरूपफलासिद्धिरिति सदृष्टान्तमाह–यदि त्विति । ननु सम्भूतवाक्य इव "यदेपः" इति वाक्येऽप्युभयपरत्वमस्तु, आकाशश्रुतिब्रह्मलिङ्गयोः सत्त्वात् । तथा च तस्य भूतपरत्वेऽपि विष्णुपरत्वस्यापि सत्त्वात्

चन्द्रिका

सिद्धान्ते सम्भूतवाक्ये सम्भूतत्ववत् "यदेष" इति वाक्ये कस्य चित् भूतलिङ्गस्य अभावात्, भूते प्रसिद्धिमात्रस्य चैतत्सिद्धान्तेन निरासात्।

प्रकाश·

आनन्दमयस्य विष्णुत्वे हेतुव्यपदेशात्वं सेत्स्यतीति चेन्न, सम्भूतवाक्येऽन्यपरत्वानभ्युपगतौ भूतोत्पत्त्याद्यसिद्धिवदिहान्यपरत्वाभावे बाधकाभावान्निरवकाशब्रह्मलिङ्गानुपपत्तेश्च । उक्तं च चतुर्थपादीयानुव्याख्याने—

तेषुतेषु पदार्थेषु रूढिरङ्गीकृता यतः ।
प्रयोजनबहुत्वेन तस्यतस्याविरोधत· ॥
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ।
तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोह्यते ॥

इति । यत्तावत्सिद्धान्तिनं प्रत्यापादितं, सम्भूतवाक्य इव "को ह्येवान्यात्" इत्यत्रापि भूतपरत्वं स्यात् । तथा च न सिद्धान्तफलसिद्धिरिति, तद्वैषम्यप्रदर्शनेन परिहरति—सिद्धान्त इत्यादिना। ननु भूतलिङ्गाभावेऽपि भूते प्रसिद्धाकाशश्रुतिरस्तीत्यत आह—भूतइति । एतदिति । निरवकाशलिङ्गेनान्यत्रप्रसिद्धिबाधकथनरूपेणेत्यर्थः। एवं सिद्धान्ते "आकाश इति होवाच" इति वाक्यस्य "को ह्येवान्यात्" इति वाक्यस्य च तुल्यन्यायविषयताप्रदर्शनेन सिद्धान्ते प्रयोजनसिद्धिं समर्थ्येचदानीं पूर्वपक्षेऽपि द्वयोस्तुल्यन्यायविषयताप्रद-

चन्द्रिका

"इति होवाच" इति वाक्ये च पूर्वपक्षे प्रबलभूतलिङ्गाभावात्, ब्रह्म लिङ्गानामेव च भावात्। भूते प्रसिद्धिमात्रेण च ब्रह्मलिङ्गानामन्यथाकरणस्य "यदेष" इति वाक्येऽपि साम्यात्। तस्माद्युक्तं प्रयोजनम्। एवमुत्तरत्रापि द्रष्टव्यम्। ननु यद्येवमानन्दमयाधिकरणाक्षेपः, तर्हि साक्षात्तदाक्षेपार्थं आनन्दमयशब्दे मयटो विकारार्थत्वमिव "यदेष" इति वाक्ये आकाशशब्दस्य भूताकाशपरत्वमाशङ्क्य, आनन्दमयस्य

प्रकाश

र्शनेन पूर्वपक्षफलं च समर्थयते—इति होवाचेति। साम्यादिति। तथा च पूर्वपक्षेऽपि "इति होवाच" इत्यस्य भूतपरत्वे "को ह्येवान्यात्" इत्यपि भूतपरं स्यादिति भावः। प्रयोजनमिति। 'पूर्वपक्षे सिद्धान्ते च' इति शेषः। एवमिति। यत्रयत्र पूर्वाक्षेपः प्राणज्योतिरधिकरणादौ, तत्र सर्वत्रापि तुल्यन्यायविषयतामापाद्य व्युत्पादनीयमित्यर्थः। ननु यदि "को ह्येवान्यात्" इत्यत्रत्या काशस्य विष्णुत्वसिद्धिः फलं, तर्हि नाधिकरणान्तरमारम्भणीयम्, "विकारशब्दान्नेति चेत्" इतिवत् हेतुव्यपदेशसूत्रानन्तरं "आकाशशब्दान्नेति चेत्तल्लिङ्गात्" इति गुणसूत्रेणैव विष्णोरेवाकाशशब्दवाच्यत्वोक्तिसम्भवात्। अधिकरणान्तरत्वेऽपि "को ह्येवान्यात्" इत्यस्यैव विषयत्वसम्भवे वाक्यान्तरोदाहरणस्यायुक्तत्वादित्याशङ्क्ते—ननु यद्येवमिति। साक्षादिति। "इति होवाच" इत्यस्य भूतपरत्वात्तत्तुल्यन्यायतया अयमपि भूतपरस्स्यादित्यस्य वक्तत्वा-

चन्द्रिका

विष्णुत्वसिद्धये ब्रह्मणि समन्वय उच्यताम् । अन्तस्स्थत्वस्य तु आनन्दमयप्रकरणे श्रवणेऽपि तस्य स्वतोऽन्यत्रप्रसिद्ध्यभावात् अन्यत्रप्रसिद्धेन्द्रादिश्रुतिसाहचर्यस्य च तत्प्रकरणे अभावेन तत्र पूर्वपक्षानुदयाद्वाक्यान्तरोदाहरणं युक्तम् । आकाशशब्दस्त्वानन्दमयप्रकरणे श्रुतः स्वतोऽन्यत्र प्रसिद्धश्चेति तत्रैव पूर्वपक्षोदय इति वैषम्यम् । सत्यम्, तथाऽपि मयट इव आकाशशब्दस्य समन्वेतव्यानन्दमयशब्दान्तर्भावाभावेन न्यायभेदेन चाधिकरणभेदे स्थिते, "आकाश इति होवाच" इति वाक्यान्तरस्याऽपि समन्वये एतत्प्रकरणस्थबहुगुणलाभात्, तथा एतत्समन्वयेन निर्णीतब्रह्मप्रकरणस्थयदेषवाक्यसमन्वयवत्, "यदेषः" इति वाक्यसमन्वयेन अनिर्णीतब्रह्मप्रकरणस्थैतद्वाक्यसमन्वयासिद्धेः, तथा सिद्धान्तिना सावकाशयितव्यानां भूत-

प्रकाशः

दिति भावः । इयं शङ्काऽन्तरधिकरण एव कुतो न कृता, किं विशिष्यात्रेत्यत आह—अन्तस्स्थत्वस्य त्विति । यद्यपि "यो वेद निहितं गुहायां" इति मन्त्रवर्ण एवान्तस्स्थत्वं श्रुतं, तथाऽपि मन्त्रवर्णोक्तस्यैवात्रानन्दमयशब्देनोच्यमानत्वात् 'तत्प्रकरणे श्रवणेपि' इत्युक्तम् । यत्तावदुक्तमधिकरणान्तरं न कार्यमिति, तत्तावन्नेत्याह—तथाऽपीति । न्यायेति । अचेतनस्वभावस्यापि भगवदधीनत्वप्रतिपादनरूपन्यायभेदेनेत्यर्थः । अधिकरणान्तरत्वेऽपि वाक्यान्तरमयुक्तमित्येतन्निरस्यति—आकाश इतीति । एतदिति । "इति होवाच"

चन्द्रिका

लयाधिष्ठानत्वादिपूर्वपक्षयुक्तीनां निरवकाशयितव्यानां परोवरीयस्त्वादिसिद्धान्तयुक्तीनां च "यदेष" इत्यत्राभावाच्च वाक्यान्तरोदाहरणं युक्तम् । अत्र यद्यपि "आकाश इति होवाच" इत्यत्र आकाशस्यान्यत्वे "आकाशादेव समुत्पद्यन्ते" इति तत्प्रकरणे श्रुतं कारणत्वमपि अन्यस्यैव स्यादिति जन्मादिसूत्रमप्याक्षेप्तु शक्यं भाति । तथाऽपि "समुत्पद्यन्ते" इत्यस्योपादानत्वेऽप्युपपत्तेः

प्रकाश

*इत्येतत्परास्तमित्यर्थः । नन्वस्त्वधिकरणान्तरं वाक्यान्तरोदाहरणं च ।* तथाऽपि न भाष्योक्तं प्रयोजनं, "सर्वाणि ह वा इमानि भूतान्याकाशादेव" इति साक्षाद्भूतकारणत्वस्य पूर्वपक्षे भूतनिष्ठत्वेन जन्मादिसूत्राक्षेपस्य ऋजुत्वादित्याशङ्क्याह—अत्रेति । उपादानत्वेऽपीति । ननूपादानत्वोक्तौ का सङ्गतिरिति चेदयं भावः—"अस्य लोकस्य का गति." इति पृथवीगतिप्रश्नस्य 'आकाशः' इत्युत्तरमभिधाय, कथमेतत्, अपां कार्यं हि पृथिवी, तत्रैव च लीयत इति तासामेव पृथिवीगतित्वोपपत्तेरित्याशङ्क्य, मैवं, मूलोपादानत्वादित्याह—**सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति** । न च तर्हि "आत्मन आकाशः" इति श्रुतेरात्मा वाच्य इति शङ्क्यम्, भूतविषयविचारे वियत एव वक्तव्यत्वात् । न चाकाशस्यापि भूतत्वात् 'सर्वाणि' इति विरुद्धं, "इदं सर्वमसृजत" इतिवत्तव्यतिरिक्तग्रहणोपपत्तेः । न च 'एव' इत्यवधारणानुपपत्तिः,

चन्द्रिका

जन्मादिसूत्रोक्तकर्तृत्वाक्षेपायोगात्, आनन्दमयाधिकरणानाक्षेपे तदाक्षेपकान्तरधिकरणप्राणाधिकरणयोर्मध्ये अस्य निवेशायोगाच्च आनन्दमयाधिकरणमेवाक्षिप्तम् । केचित्तु–अचेतनस्यैव पूर्वपक्षिणाऽऽकाशत्वेन शङ्क्यमानत्वात् जन्मादिसूत्रोक्तकर्तृत्वानाक्षेप इत्याहुः। तन्न, अचेतनस्याप्यभिमानिद्वारा आनन्दमयत्ववत् कर्तृत्वस्याप्युपपत्तेः । अन्ये तु–सन्निकृष्टानन्दमयाक्षेपसम्भवे विप्रकृष्टजन्मादिसूत्राक्षेपो न युक्त इत्याहुः । तन्न, टीकायामानन्दमयाक्षेपस्य व्यवहितजिज्ञासाक्षेपपर्यन्तत्वोक्तेः ॥

प्रकाशः

परम्परया भूतोपादानस्यापरस्याभावादिति । हेत्वन्तरमाह—आनन्दमयेति । तत्राक्षेपान्तराभावादिति भावः । उत्तानदृशां परिहारमनूद्य निरस्यति—के चित्त्विति । अभिमानि द्वारेति । "आकाशस्याचेतनत्वेनानन्दानुपपत्तावपि अभिमानिद्वारा तदुपपत्तेः" इति टीकोक्तेरिति भावः । आपाततः प्रतीयमानं परिहारान्तरमुट्टङ्क्य निरस्यति—अन्ये त्विति । टीकायामिति । यद्यप्येतदधिकरणटीकायां न जिज्ञासासूत्राक्षेपपर्यन्तत्वोक्तिरस्ति। तथाऽपि अन्तरधिकरणादौ तत्रतत्र टीकायां तदाक्षेपपर्यन्तत्वोक्तेरनुक्तिस्थले तदाक्षेपपर्यन्तत्वमभिप्रेतमिति भावः ॥

एवं सङ्गतिमुक्त्वा, भाष्यकारीयां प्रयोजनोक्तिं तत्र वाक्यान्तरो-

चन्द्रिका

अत्र आकाशः किं भूताकाशः किं वा ब्रह्मेति चिन्ता। तदर्थं किमाकाशश्रुतिप्रसिद्ध्यनुसारेण परोवरीयस्त्वादिलिङ्गं बाध्यम् किं वा विपरीतं इति । तदर्थं प्रसिद्धिबाधे श्रुतेः किं मुख्यत्वहानिः उत न इति । तदर्थमाकाशशब्दप्रवृत्तिनिमित्तं ब्रह्मणि किं नास्ति उतास्ति इति । तदर्थं जडस्वभावः किमीश्वरानधीनः उत तदधीनः इति । यद्यधीनः,

प्रकाशः

दाहरणं च समथर्चेदानीं विषयसंशयौ दर्शयति—अत्रेति । छान्दोग्ये "अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् । स एष परोवरीयानुद्गीथः स एषोनन्तः" इति श्रुते वाक्ये शालावत्येन कृतस्य पृथवीगतिप्रश्नस्योत्तरत्वेन प्रवाहणेनोक्त आकाशोऽत्र विषय इत्यर्थः। उपलक्षणमेतत् । वाय्वादिभूतवाचिनः सर्वेऽपीति ध्येयम्। भूतेति । आकाशशब्दस्यावकाशसाधारणत्वेऽपि भूतप्रकरणत्वात् 'भूताकाशः' इत्युक्तम् । बाध्यमिति । सावकाशयितव्यमित्यर्थः। विपरीतमिति । लिङ्गानुसारेण श्रुतिर्बाध्येत्यर्थः । 'प्रसिद्धिबाधे' अन्यपरत्वत्याजने । अस्पष्टांशे फलफलिभावं स्वयमेवाह—यद्यधीन इति । अन्यत्र स्पष्टमिति भावः । तथा हि यदि जडस्वभाव ईशानधीनस्तदा जडस्वभावं प्रति स्वातन्त्र्यरूपस्य

चन्द्रिका

तदा तदधीनत्वन्यायेन ब्रह्माणि मुख्यत्वम्, अन्यथा तु न।

प्रकाशः

जडवाचिशब्दप्रवृत्तिनिमित्तस्य ब्रह्मण्यभावाच्छ्रुतेः मुख्यत्वहानेन बाधायोगाच्छ्रुत्या भूतमिति पूर्वपक्षे फलफलिभावः। यद्यधीनस्तदा स्वातन्त्र्यरूपप्रवृत्तिनिमित्तस्य सत्त्वात् ब्रह्मणि श्रुतेर्मुख्यत्वेन बाधाभावेन विष्णुरिति सिद्धान्ते फलफलिभावः। **तदधीनत्वन्यायेनेति।** "आनुमानिकमप्येकेषा" इत्यधिकरणे "तदधीनत्वादर्थवत्" इति गुणसूत्रे "अव्यक्तात्पुरुषः परः" इत्यादावव्यक्तादिगतावरत्वस्य भगवद्गतत्वाभावेपि तस्मिन्नेवावरत्वादिवाचिशब्दजातमर्थवत्, प्रधानादिगतपरावरत्वादिधर्माणा भगवदधीनत्वादिति वक्ष्यमाणन्यायेन जडस्वभावस्य विवरत्वादेर्भगवत्यभावेऽपि तदधीनत्वेन जडवाचिशब्दवाच्यत्वं भविष्यतीत्यर्थः। नन्वत्राकाशस्वभाव ईश्वरानधीनस्तदधीन इति वा, भूतस्वभावः तदनधीनस्तदधीन इति वा चिन्तनीयम्। न तु जडस्वभाव इतीति चेत्, अयं भावः—न केवलं भूतवाचिन एवोदाहरणं, किं तु स्वभावप्रवृत्तिनिमित्तकास्सर्वेऽपि जडवाचिन इति। वक्ष्यते चैतदनुपदम्। अनुव्याख्यानोक्तप्रमेयाश्रिताभ्यधिकाशङ्कोपयुक्तेयं चिन्तापरम्परा सूत्रप्रतिज्ञाशब्यावस्था प्रदर्शिता। हेत्वंशव्याववर्त्यभाष्यादिसूचितप्रमाणाश्रिताभ्यधिकाशङ्कोपयुक्ता तु 'लिङ्गं बाध्यं किं वा विपरीतं' इत्यनन्तरं, 'तदर्थं श्रुतिः प्रबला लिङ्गं तु दुर्बलमुत

चन्द्रिका

यद्यपि निरवकाशलिङ्गैः लोकप्रसिद्धिबाध इह पूर्वत्र च अविशिष्टः। विषयवाक्यभेदमात्रेण च नाधिकरणभेदः । तथाऽप्यभ्यधिकाशङ्कानिरासादपौनरुक्त्यम् । शङ्का च,

चेष्टा हि चेतनाना या सा भवेत्तत्प्रसादतः ।

अचेतनस्वभावस्तु विवरादिः कथं ततः ॥

इत्यनुव्याख्यानेन दर्शिता । तत्राकाशशब्दप्रवृत्तिनिमित्तस्य विवरत्वादेः

प्रकाश

विपरीतमिति, तदर्थं श्रुतिप्राबल्ये हेतुरस्ति नवा' इति द्रष्टव्या । पूर्वेणेदं गतार्थमित्याक्षिप्य समाधत्ते–यद्यपीति । विषयभेदेनाधिकरणभेदमाशङ्क्य निरस्यति—विषयेति । तथात्वे विषयाणामानन्त्येन शास्त्रापर्यवसानं स्यादिति भावः । भाष्ये अनुपलम्भादाह—शङ्का चेति । 'दर्शिता' इत्यन्वयः । श्लोकार्थं विशदयन्नधिकाशङ्काप्रकारमाह–तत्रेति । अत्रेदं द्रष्टव्यम्—अयमाकाशो भूतमेव, न तु विष्णुः । तस्य विष्णुवाचित्वं हि रूढ्या योगेन वा । नाद्य', भूत एव तस्याः सत्त्वेनासिद्धेः । द्वितीयेऽपि योगः क्लृप्तो वा कल्प्यो वा । आद्येऽपि अवकाशत्वं आकाशत्वमिति यद्विवरत्वं प्रवृत्तिनिमित्तं, तस्य प्रधानादिगतावरत्वादिवत् भगवदधीनत्वेन वा इन्द्रादिशब्दप्रवृत्तिनिमित्तैश्वर्यादिवत् भगवद्गतत्वेन वा योगोऽभिमत' । नाद्य', तदभावात् । कुत इत्यतः "अचेतनस्वभावस्तु" इत्यनेनाभिमतं हेतुद्वयमाह–आकाशशब्दप्रवृत्तिनिमित्तस्येति ।

चन्द्रिका

भगवदनधीनत्वे अचेतनगतत्वं स्वभावत्वं चेति हेतुद्वयं विवक्षितम् । तत्र आद्ये भृत्यगतस्य जयस्य राजाधीनत्वेन 'राजा जयी' इति प्रयोगस्येव अचेतनगतप्रवृत्तिनिमित्तस्य चेतनाधीनत्वे चेतने जडवाचिशब्दप्रयोगस्य अदर्शनात्, तत्प्रसादलब्धत्वरूपं तदधीनत्वं शब्दप्रवृत्तिनिमित्तम्, न तु यथेष्टविनियोगार्हत्वरूपम् । न चाचेतने भगवतः प्रसादोऽस्ति इति शङ्काभिप्रायः। अत एवानुव्याख्याने "तत्प्रसादतः" इत्युक्तम् । एवं चाचेतन-

प्रकाश

**हेतुद्वयमिति** । 'साक्षाद्वा परम्परया वा' इति शेषः । 'तत्र' आकाशगतं विवरत्वं न भगवदधीनं, अचेतनगतत्वादचेतनस्वभावत्वाच्चेति साक्षाद्धेतुत्वपक्षे । ननु सर्वस्य भगवतो यथेष्टविनियोगयोग्यत्वस्य सिद्धत्वादचेतनगतत्वमनधीनत्वे कथं हेतुरित्याशङ्क्य, आद्यं हेतुं दृष्टान्तोक्तिपूर्वं विवृणोति–आद्य इति । **अदर्शनादिति** । ननु "मृदब्रवीदापोऽब्रुवन्" इत्यादावभिमानिचेतने मृदादिशब्दप्रयोगो दृष्ट इति चेन्न, अत्रत्यसिद्धान्तन्यायेनाभिमान्यधीनत्वे सिद्धे "तदधीनत्वात्" इति न्यायेन देवताया प्रयोगस्य वक्ष्यमाणत्वेनात्रत्यपूर्वपक्षिणोऽसम्प्रतिपत्तेरिति भावः । एतेनाचेतनगतं 'विवरादिः' विवरत्वादिकं, 'ततः' भगवत्प्रसादात्, 'कथं' न कथमपीति योजितम् । अनेन लब्धमर्थमाह–एवं चेति । 'तेन रूपेण' अचेतनगतप्रवृत्तिनिमित्तत्वेन रूपेण, प्राण-

चन्द्रिका

गतप्रवृत्तिनिमित्तका. सर्वेऽपि शब्दा इह तेन रूपेण विचार्या । द्वितीये तु इन्द्रादिशब्दप्रवृत्तिनिमित्तानामैश्वर्यादीनामिव विवरत्वादीना स्वभावत्वात्रेशाधीनता, अन्याधीनत्वे स्वभावत्वहानेः। भूम्यादिगतस्वाभाविकाभिरूप्यादिना राजचभिरूपादिशब्दाप्रयोगाच्चेति शङ्काभिप्राय । अत्रापि स्वाभाविकप्रवृत्तिनिमित्तकाः शब्दाः सर्वेऽपीह तेन रूपेण विचार्या. । कस्य चिदुदाहर्तव्यत्वादानन्दमयाक्षेपकत्वाच्च आकाशशब्द उदाहृतः, वाजपेयाधिकरणे उ-

प्रकाश

गायत्रीज्योतिरादिशब्दा उदाहरणम् । एकस्यानेकत्रोदाहरणं तूपपादयिष्यते । अन्यथा तेषु शब्देषु विष्णुवाचित्ववदत्रापि विष्णुवाचित्वप्रसङ्गादिति भावः । स्वभावत्वहेतुं विवृणोति—**द्वितीये त्विति । स्वाभाविकेति** । स्वभावसिद्धं अनागन्तुकमेव प्रवृत्तिनिमित्त येषा ते इत्यर्थ । तर्हि भाष्याद्युक्तोदाहरणविरोध इत्यत आह—**कस्य चिदिति । वाजपेयाधिकरण इति** । प्रथमाध्याये चतुर्थपादे "नामधेये गुणश्रुते स्याद्विधानमिति चेत्" इति पञ्चमेऽधिकरणे चिन्तितम् । "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयशब्द किं गुणविधि कर्मनाम वेति संदेहे, 'यजेत' इत्यत्र यागे द्वितीयाद्यभावेन कर्मकरणत्वयोरप्रतीते प्रकृतिप्रत्ययाभ्या यागभावनामात्राभिधानात्, समभिव्याहरेण तयो सम्बन्धमात्रमेवावगम्यते । तच्च कर्मत्वकरणत्वसाधारणमिति यागकर्मत्वांशे गुणसम्बन्ध, तत्करणत्वांशे फलसम्बन्धश्च विनैव मत्व-

चन्द्रिका

द्भिदादिशब्दानामपि विचार्यत्वेऽपि वाजपेयशब्द इव । यद्वा—

प्रकाशः

र्थलक्षणया तन्त्रेण स्यादिति गुणविधिरिति प्राप्ते, सम्बन्धमात्र परत्वे आकाङ्क्षानुदयेन गुणफलयोरन्यतरेणाप्यसम्बन्धस्स्यात् । लक्षणयाऽन्यतरविशेषपरत्वे अन्यतरेणैव सम्बन्धस्स्यात् । उभय विशेषपरत्वे तु वाक्यावृत्तिः, गुणप्रधानत्वोद्देश्योपादेयत्वविधेयानुवाद्यत्वकृतं वैरूप्यं न स्यादिति तन्त्रसम्बन्धासम्भवात् गुण विवक्षासामानाधिकरण्यनिर्वाहाय मत्वर्थलक्षणादोषो दुर्वार इति वाजमन्नरूपं सुराद्रव्यं पेयमस्मिन्निति सुराग्रहणविधानात् तत्-प्रख्यन्यायेन नामधेयमिति सिद्धान्त इति । अत्र

सर्वेष्वाख्यातशब्देषु तन्त्रसम्बन्धसम्भवात् ।

मत्वर्थलक्षणादोषो नास्तीत्याक्षिप्यतेऽधुना ॥

इत्युक्तरीत्या पूर्वपक्षे उद्भिदादिषु विशिष्टविधिपक्षोद्भावितमत्वर्थ-लक्षणादोषोद्धारात् सिद्धान्ते तद्व्यवस्थापनाच्चोद्भिदादिशब्दानां वि-चार्यत्वेऽपि यथा वाजपेयशब्दोदाहरणं, तथा प्रकृतेऽपीत्यर्थः । एतेन स्वभावरूपं विवरत्वादिकं 'ततः' भगवतः 'कथं' भगवदधीनं कथं स्वभावत्वादिति योजनोक्ता भवति । एवं द्वयोस्तदधीनत्वे साक्षाद्धेतुत्वमुपपाद्य परम्परया हेतुत्वं व्यनक्ति—यद्वेति । विवरत्वादिकं न भगवदधीनं भगवत्प्रसादालब्धत्वाद्व्यतिरेकेणैश्वर्यादिवत्, तथा अनागन्तुकत्वान्नान्याधीनं व्यतिरेकेण

चन्द्रिका

विवरत्वादिकं किमिन्द्रादिगतैश्वर्यादिवदीश्वरप्रसादलब्धत्वात् तद धीनम् किं वा कुलालाद्यधीनचक्रादिभ्रमणवदागन्तुकत्वमात्रेण । नाद्य, तस्याचेतनगतत्वेन तदभावात् । नान्त्य, स्वभावत्वात् । तथा च विवरत्वादिकं नेश्वरानिमित्तमीश्वरानधीनत्वे सापेक्षयोरेवाचे

प्रकाश

कुलालचक्रभ्रमणवत् । तत्रासिद्धो हेतु इत्यत क्रमेणाचेतनगतत्व स्व भावत्व च हेतुद्वयसमर्थनपरत्वेप्यत इति भावेन विकल्पमुखेनो· पपादयति—**विवरत्वादिकमिति । सापेक्षयोरिति ।** उक्तरी त्या मध्ये हेत्वन्तरसापेक्षयोरित्यर्थ । यथा सावयवत्वस्य कार्य त्वद्वारा कर्तृसाधनत्व, तद्वदिति । तथा चानुव्याख्यानस्यैव यो जना—'विवरादि' विवरत्वादिकं कथ 'तत' भगवत्प्रसादात्, कथ भगवत्प्रसादलब्ध, अचेतनगतत्वात् । तथाच तत्प्रसादल· ब्धत्वाभावात् विवरत्वादिकं 'कथ तत' तदधीन कथ, न कथ मपीति । तथा विवरत्वादिकं 'कथ तत' तदधीन कथ, 'अनागन्तुकत्वात्' इति शेष । तदेव कुत इति चेत्—स्व भावत्वादिति । एव "अचेतनस्वभावस्तु" इत्यनेन विवक्षित हे तुद्वय स्वातन्त्र्यरूपप्रवृत्तिनिमित्तनिरसने साक्षात्परम्परया वा सा धनमित्येतच्छ्लोकारूढतया दर्शितम् । विवरत्वादेर्भगवद्गतत्वेन योगोऽभिमत इति द्वितीय कल्प । तन्निरासस्तु श्लोकाद्बहिरेव ध्येय । तथा हि—'विवरत्वादिकं ऐश्वर्यादिवन्न भगवद्गत'

चन्द्रिका

तनगतत्वस्वभावत्वयोर्हेतुत्वम् । यद्वा—

स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ।

इत्युक्तत्वात् द्वयं निमित्तम् । तत्र न तावत् निरवधिकैश्वर्यादिवत् निरवधिकविवरत्वादिक ब्रह्मगतम्, तस्याचेतनगतत्वात् । नापि पुरन्दरादिगतैश्वर्यवत्तदधीनम्, स्वभावत्वात् । तथा च विवरत्वादिकं ब्रह्मण्याकाशादिशब्दवृत्तौ न निमित्तमिति निमित्तत्वाभावे सापेक्षयोर्हेतुत्वम् । श्लोके सार्वविभक्तिकतस्यन्तस्य तत-

प्रकाश.

इति साध्यमध्याहार्यम् । हेतुस्तु 'अचेतनगतत्वात्' इति । ननूक्तपक्षद्वये तदधीनत्वनिरास एव श्लोकारूढो न तद्गतत्वनिरासः । न च तद्गतत्व निमित्तमेव नेति वाच्यम्, अनुव्याख्याविरोधादित्याशयेन द्वयोरपि श्लोकारूढतया कल्पान्तरमाह—**यद्वा स्वातन्त्र्यमिति।** **विवरत्वादिकमिति** । श्लोके भावप्रधाननिर्देश इत्युक्त भवति। **सापेक्षयोरिति** । तद्गतत्वाभावतदनधीनत्वरूपहेतुद्वयं मध्ये अपेक्ष्य 'अचेतनस्वभाव' इत्यत्र विवक्षित हेतुद्वयं निमित्तत्वाभावं साधयतीत्यर्थ । **सार्वविभक्तिकेति** । यद्यपि "पञ्चम्यास्तसिल्" इति पञ्चम्यर्थ एव तसिल्विहित । तथाऽपि "प्रतियोगे पञ्चम्यास्तसिः" "आद्यादिभ्य उपसङ्ख्यानम्" इत्युक्ते "यतो यतो निश्चलति मनश्चञ्चलं" इत्यादाविव सप्तम्यर्थे तसिरित्यर्थः । तत्रैव योजना—विवरत्वादिक 'कथं तत.' तत्र भगवति कथं, कुतः ? अचेत-

चन्द्रिका

श्शब्दस्य तत्रेत्यप्यर्थः । अस्मिन्मते तद्गतत्वपक्षोऽपि श्लोकेनैव दूषितः । मतान्तरे तु बहिरेव दूष्यः । सुधायां तु—न ताषद्विवरत्वादिकमैश्वर्यादिवदागन्तुकज्ञानादिरूपहेतुद्वारा ईश्वरायत्तम्, अचेतनाश्रितत्वात् । नापि स्वरूपत, स्वभावत्वादिति व्याख्यातम् । तत्र इन्द्रादिशब्दप्रवृत्तिनिमित्ते पालनादिरूपप्रयत्नात्मकैश्वर्ये ज्ञानादेरेव हेतुत्वदर्शनात् अत्रापि ज्ञानादिरेव हेतुर्वाच्यः । स च अचेतने नास्तीत्यभिप्रायः । यत्तु सुधायां अन्तरधिकरणपूर्वपक्षे अचेतनस्वभावस्याव्रत्वादेर्भगवदधीनत्वाङ्गीकरणम्, तदेतदधि-

प्रकाश.

नगतत्वात् । ततश्च तद्गतत्वाभावान्न निमित्तमिति । तथा विवरत्वं 'कथं ततः' तदधीनं कथं, कुतः? स्वभावत्वात् । ततश्च तदधीनत्वाभावान्न निमित्तमिति । पूर्वोक्तपक्षयोरस्य च पक्षस्य विशेषं स्वयमेवाह—अस्मिन्मत इति । बहिरेवेति । उक्तमिदं प्राक्तनैवास्माभिः । एवं स्वयमनुव्याख्यानस्य त्रेधाऽभिप्रायमुक्त्वा, सुधोक्तमपि प्रकारान्तरमनुसन्धेयमिति भावेन तदुक्तं सङ्ग्रहेणानूद्य तदभिप्रायं चास्फुटत्वाद्विवनक्ति—सुधायां त्विति । 'स्वरूपत.' ज्ञानादिहेतुमनपेक्ष्य । नन्वेवं सुधायां "ननूक्तमत्रान्यत्र रूढेरविद्वत्सम्बन्धित्वाद्योगस्य च परमेश्वरायत्तात्पनिमित्तत्वादमुख्यतेति । सत्यं, तदन्नौषध्यादिपदार्थेषु स्यान्न तु पुरन्दरादिषु" इत्यादिना अचेतनस्यापि भगवदधीनत्वोक्तिरयुक्तेत्यत आह—यत्त्विति । ने-

चन्द्रिका

करणसिद्धान्तन्यायानुसन्धानेन । नह्येतदधिकरणपूर्वपक्षस्थैनैव तत्रापि पूर्वपक्षिणा भाव्यम्, तथात्वे एतदधिकरणसिद्धान्तिनैव तत्रत्यपूर्वपक्षनिरासेन तत्रत्यसिद्धान्तवैयर्थ्यात् । अनुव्याख्यानसुधाद्यनुसारेण चात्रापि टीकायां "आकाशस्याचेतनत्वेन अन्याधीनत्वायोगात्" इत्यादावाकाशपदं तत्पदप्रवृत्तिनिमित्तपरम् । तस्मादाकाशादिशब्दानां क्लृप्तं रूढं वा, "आकाशनमवकाशत्वं" इति सुधोक्तं यौगिकं वा क्लृप्तं निमित्तम् नेश्वरगतम्, नापि तदधीनम् । 'आ' समन्तात् काशत इति कल्प्यो योगस्तु क्लृप्तया भूताकाशे रूढ्या बाधितः । विद्वद्रूढिमहायोगौतु असिद्धौ, वैदिकप्रयोगबाहुल्यादेरद्याप्यसिद्धेः ।

प्रकाश.

न्वत्रानङ्गीकुर्वन् पूर्वपक्षी तत्र कथमङ्गीकुर्यादित्यत आह—नहीति । उत्तरप्रस्थानाविरोधाय टीकार्थमाह—अनुव्याख्यानेति । यद्वा—विवरत्वस्य भगवदधीनत्ववर्णनं टीकाविरुद्धमित्यत आह—अनुव्याख्यानेति । क्लृप्तो योगो नेत्युपपादितमुपसंहरति—तस्मादिति । रूढं वेति । शब्दाश्रयत्वादिरूपं वेत्यर्थः । 'निमित्तं' इत्यन्वयः । ननु मास्तु क्लृप्तो योगः, कल्प्यो भविष्यतीति द्वितीयं पक्षं निरस्यति—आ समन्तादिति । असिद्धत्वे हेतुः—वैदिकप्रयोगेति । आदिपदेन प्रवृत्तिनिमित्तपौष्कल्यग्रहणम् । ननु 'विद्वद्रूढिमहायोगावसिद्धौ' इति कथं,

चन्द्रिका

यत्तु आनन्दमयाधिकरणे—

*अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः ।*

इत्याद्यनुव्याख्यानम्, तदानन्दमयप्रकरणस्थाकाशादिशब्दानां ब्रह्मपरत्वाय आकाशाद्यधिकरणे वक्ष्यमाणन्यायमुपजीव्य प्रवृत्तमिति न तेन विद्वद्रूढ्यादिसिद्धिः । तस्माद्युक्ता अभ्यधिका शङ्का ।

प्रकाशः

अनुव्याख्यानविरोधादित्यत आह—**यत्त्विति** ।

अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ।

इत्युत्तरार्धेनान्वयः । ननु यद्येवं तर्हि "यदि "आनन्दमयोऽभ्यासात्" इति वदतः सूत्रकारस्यैतावानर्थोऽभिगतो भवेत्तर्हि तत एव गतार्थत्वात् "अन्तस्तद्धर्मोपदेशात्" इत्याद्यधिकरणानामनुत्थानमेव स्यात्" इत्याद्याशङ्क्य "अभ्यधिकाशङ्कासद्भावेनाधिकरणान्तरारम्भोपपत्तिः" इत्यन्तरधिकरणोपक्रमसुधाविरोधः, तत्र विद्वद्रूढिमहायोगौ सर्वशब्दाना सिद्धावित्युपेत्य तदाच्छादकाभ्यधिकाशङ्कयाऽधिकरणारम्भसमर्थनोक्तिप्रतीतेरिति चेन्मैवं, उत्तरत्र तदाच्छादकाभ्यधिकाशङ्कोक्तेरदर्शनात् । "तदन्नौपध्यादिपदार्थेषु स्यान्न तु पुरन्दरादिषु" इतिवाक्यस्य गतेरुक्तत्वात् । सूत्रकारस्याकाशाद्यधिकरणन्यायेन अभिमतस्य भाष्यकारेण तत्र कथंनेऽपि विद्वद्रूढिमहायोगयोरसिद्धत्वादिनाऽऽक्षेपेण पूर्वपक्षप्रवृत्तिसम्भवेन तद्वाक्यस्याप्येवं योज्यत्वादिति भावः । तस्माद्विद्वद्रूढि-

